# लोलिम्बराज-ग्रन्थावली

( दुर्लभ ग्रन्थों का संग्रह )



सम्पादक—

**डॉ० ब्रह्मानन्द त्रिपाठी**

**साहित्याचार्य, आयुर्वेदाचार्य**

एम. ए., पी-एच. डी., डी. एस-सी. एवाइ.



## लोलिम्बराज का प्रसिद्ध तिथिक्रम

श्रीलक्ष्मण रामचन्द्र पांगारकर का मत—

१५०० से १५७० शालिवाहन शक

१५७८ से १६४८ ईसवीय सन्

श्रीविनायक लक्ष्मण भावे का मत—

१५५५ शालिवाहन शक

१६ वीं शताब्दी

तंजौर वचनालय से प्राप्त पांडुलिपि में—

१५०५ शालिवाहन शक

१५८३ ईसवीय सन्

भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट में—

१५४४ शालिवाहन शक

१६२२ ईसवीय सन्

श्री गौनी का मत—

१४९८ शालिवाहन शक, १५७६ ईसवीय सन्

अन्तिम निर्णय

१४६० से १५२० शालिवाहन शक

१५३८ से १६०८ ईसवीय सन्

# निवेदन

पूज्य गुरुजनों के शुभाशीर्वाद, निर्देश, एवं सहयोग से शोध प्रबन्ध के रूप में अद्यावधि अनुपलब्ध यह लोलिम्बराज का साहित्य अत्यन्त परिश्रम के पश्चात् उपलब्ध हो सका है। इसके पूर्व 'वैद्यजीवन' ही प्रसिद्ध था। 'हरिविलास काव्य' के सम्बन्ध में विद्वानों में मतभेद या, जिसका समाधान उक्त प्रबन्ध में सप्रमाण किया गया है।

## ग्रन्थ परिचय

'वैद्यावतंस' इसके पूर्व यह निघण्टु मात्र ५५ पद्यात्मक ही उपलब्ध था। 'भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट' में संगृहीत प्रति के आधार पर इसका वर्तमान रूप दृष्टिगोचर हो रहा है।

'चमत्कारचिन्तामणि' सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी के 'सरस्वती भवन' का अन्यतम मणि है।

'वैद्यजीवन' सचमुच वैद्यों का जीवन है, अतः इसके अनेक प्रकाशन हुए हैं परन्तु वे सब अपूर्ण हैं। इस बार यथासम्भव समुपलब्ध वैद्यजीवन की प्रतियों के पाठों का प्रकरणानुसार सम्पादन कर इसको पूर्ण रूप दिया गया है।

'वैद्यककाव्य' भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट' की अनुपम देन है, वास्तव में यह ग्रन्थकार की 'नोट बुक' है।

'रत्नकलाचरित' 'इण्डिया आफिस लाइब्रेरी, लन्दन' के सौजन्य से प्राप्त हो सका। इसके पाठों को जहाँ तक हो सका शुद्ध करने का प्रयास श्रद्धेय शेवडे जी का है।

'हरिविलास काव्य' के खण्डित पद्यांशों की अधिकांश पूर्ति इसी की विभिन्न प्रतियों से करने का भरसक प्रयत्न किया गया फिर भी दो-तीन पद्य ऐसे रह गये थे जिनकी पूर्ति लोलिम्बराज की भाव, भाषा तथा शैली के अनुसार करने का अविकलश्रेय नागपुर निवासी नैसर्गिक कवि पण्डित वसन्त त्र्यम्बक-शेवड़े जी को है।

प्रस्तुत शोधकार्य के अवसर पर मुझे जो कविराज लोलिम्बराज का साहित्य प्राप्त हो सका, मैं उसे सादर, सश्रद्ध तथा सविनय सरसान्तःकरण सुधी समाज के सम्मुख परिशिष्ट के रूप में सानन्द समर्पित कर कृतकृत्यता का अनुभव कर रहा हूँ।

**डॉ० ब्रह्मानन्द त्रिपाठी**

# ग्रन्थ-सूची





# वैद्यावतंसः

## लघुनिघण्टुः

अनुकृतमरकतवर्णा शोभितकर्णा कदम्बकुसुमेन ।
नखमुखमुखरितवीणा मध्ये क्षीणा शिवा शिवं कुर्यात् ॥ १ ॥

हुतवहहुतजङ्घाजानुमांसप्रभावा-
दधिगतगिरिकन्यास्तन्यपीयूषपानः ।
रचयति चरकादीन् वीक्ष्य वैद्यावतंसं
कविकुलसुलतानो लाललोलिम्बराजः ॥ २ ॥

यत् प्रसिद्धमिह वर्तते फलं शाकमन्यदपित न्निरूप्यते ।
अप्रसिद्धकथनं हि निष्फलं ग्रन्थविस्तरभयान्न लिख्यते ॥ ३ ॥

द्राक्षा साक्षात्सुधा तद्वन्मधुरा रसपाकयोः ।
सृष्टमूत्रशकृद्गुर्वी स्निग्धा शुक्रकरी हिमा ॥ ४ ॥

तुवराक्षि हिता मदात्ययानिलमायुक्षतजक्षयक्षयान् ।
श्वसनं कसनं ज्वरं तृषं स्वरभेदं मुखतिक्तता हरेत् ॥ ५ ॥

भवति पवनपित्ताऽसृक्करं बालमाम्रं
जनयति कफपित्तेऽप्यस्थिबन्धोपपन्नम् ।
अथ गुरुमधुराम्लं श्लेष्मशुक्लप्रभाकृत्
परिणतमनिलघ्नं तुष्टये पुष्टये स्यात् ॥ ६ ॥

हृद्यः स्निग्धो रोचनः सौरभाढ्यो वैद्यैरित्थं तद्रसः स्तूयमानः ।
खण्डैः खण्डैरन्वितो मण्डकानां सार्धं भोक्तुं पञ्चवक्त्रः शिवोऽभूत् ॥ ७ ॥

त्रीन्दोषान् सातिपित्ताञ्शमयति मधुरं दाडिमं चाम्लमुष्णम् ।
किञ्चित् पित्ताऽविरोधि द्यति पवनकफौ चोभयं ग्राहि हृद्यम् ॥ ८ ॥

स्निग्धं लघ्वग्निवृद्धि रुचिमपि जनयेत्स्वादु कोलाफलन्तु ।
स्निग्धं वातश्च पित्तं क्षपयति च कफं मेदुरं चर्करीति ॥ ९ ॥

भक्ताभिलाषजनकं पवनापहारि,
बिभ्रद्रसं मधुरमम्लरसञ्च किञ्चित् ।
आलिङ्गितं गुरुतया परिपाकलक्ष्म्या
नारङ्गजं फलमुदेति मुदे न कस्य ॥ १० ॥

स्निग्धं कषायमधुरं गुरुभाग्यवन्तो
राजादनस्य परिपक्वफलं लभन्ते ।
स्निग्धं कषायमधुरं द्विजदार्ढ्यकारि-
विष्टम्भि दन्तविशदं बकुलोद्भवं स्यात् ॥ ११ ॥

सन्तर्पणं स्वादु कषायमम्लं
भव्यं भवेद् वक्त्रविशोधनाय ।
अभव्यमाहुर्लकुचं फलानां
त्रिदोषकृच्छुक्रविनाशनञ्च ॥ १२ ॥

अशीतमम्लमग्निकृत् समस्तगुल्मशूलनुत् ।
अरोचकं विसूचिकां कृमींश्च निम्बु नाशयेत् ॥ १३ ॥

कोलाम्बिकाफलं शुष्कं भ्रमक्लमहरं लघु ।
कफवातहरं तृष्णाच्छेदि भेदि प्रदीपनम् ॥ १४ ॥

आर्द्रं पाचनदीपनं रुचिकरं वृष्यं कटूष्णं वरं
स्वर्यं मेहहरं कफानिलहरं शोफापहं शूलजित् ।
जिह्वाकण्ठविशोधनं सलवणं पथ्यं सदा भोजने
निम्बूतोयविमिश्रितं रुचिकरं सन्दीपनं सारणम् ॥ १५ ॥

उष्णेतरं शुक्रकरं समेतं रसैरशेषैर्लवणं विनैकम् ।
दोषांश्च हत्वा ह्यधिकं फलेषु धात्रीफलं दृष्टिबलङ्करोति ॥ १६ ॥

प्राचीनामलकं त्रिदोषशमनं किञ्चिद्गुरुत्वान्वितं
शीतं स्वादु कफापहं गुरुफलं श्लेष्मातकस्य स्मृतम् ।
खर्जूरं गुरुशीतलं समधुरं वृष्यं वपुः पुष्टिदं
पथ्यं पित्तसमीरयोश्च श्वयथौ शोषेऽभिघातेऽपि च ॥ १७ ॥

वृष्यं पित्तसमीरजिद्गुरुहिमं प्रोक्तं प्रियालोद्भवं
वृष्या पित्तसमीरहा च मधुरा मज्जा प्रियालोद्भवा ।
मज्जः कोलभवोऽपि तद्गुणयुतस्तृट्छर्दिकासान् जयेत्
स्यादम्लं करमर्दकं रुचिकरं तृष्णापहं पित्तकृत् ॥ १८ ॥

स्रोतोमूत्रपुरीषरोधनकरं कण्ठाहितं जाम्बवम्
पित्तश्लेष्मनिषूदनं गुरुतरं स्याद् वातलं शीतलम् ।
सर्वग्राहि विषापहं तदितरं कण्ठाहितं दोषलं
हिक्काछर्द्यरुचित्रिदोषशमनं पक्वं कपित्थं स्मृतम् ॥ १९ ॥

स्निग्धं वस्तिविशोधनं सुमधुरं पित्तापहं शीतलं
वृष्यं बृंहणतर्पणं गुरुतरं स्यान्नारिकेलीफलम् ।

वृष्यं तृट्चलहृल्लघुज्वलनकृत्तोथं तदन्तर्गतम्
पेथं दक्षिणदेशजं प्रदरहृत् सीमन्तिनीनां प्रियम् ॥ २० ॥

पित्तापहं ज्वरहरं कफनाशनञ्च, रुच्यग्निपुष्टिजननं लघु सेवसंज्ञम् ।
सुस्वादु पाकरसयोर्गुरुशीतलञ्च, श्लेष्मामवातकरमञ्जिरमग्निशत्रु ॥ २१ ॥

पाके स्वादु रुचिप्रदं कृमिहरं हृद्यं पटोलं स्मृतं
स्यात्कर्कोटकमप्यरोचकहरं स्वादु त्रिदोषापहम् ।
वृन्ताकं कटुतिक्तमुष्णमधुरं क्षारं क्षुधादीपनं
हृद्यं रुच्यमपित्तलं कफमरुज्जित्सर्वशाकोत्तरम् ॥ २२ ॥

जाम्बूनदीयां प्रतिमां यदीयां वक्षःस्थले वामदृशो वहन्ति ।
अशेषशाकावलिमण्डनत्वं तत्कारवेल्लं न लभेत कस्मात् ॥ २३ ॥

जयति जयिनमग्निं दुर्जरान्नेषु कर्तुं
पटुसकटुकफघ्नाग्रेसरं कारवेल्लम् ।
श्वसनकसनतृष्णा यक्ष्मपित्तास्रपित्त-
ज्वरदवथुकफघ्नस्तन्यकृद् विम्बमाहुः ॥ २४ ॥

आलुको जीवनस्थोऽपि गुरुमेहार्शजन्तुजित् ।
तत्कन्दोदुर्जरो ग्राही कण्डूकृत् कफदः स्मृतः ॥ २५ ॥

हस्तिघोषा रसा स्निग्धा मधुरा श्लेष्मला गुरुः ।
आस्यरोगहरी तृष्णाजिह्वाताल्वोष्ठरोगजित् ॥ २६ ॥

पित्तानिलघ्नं कफजिद् विपाकात् पथ्यं ज्वरे स्वादुरसोपपन्नम् ।
हुताशनोद्दीपनभेदनञ्च कोशातकं शाकवरं वदन्ति ॥ २७ ॥

शुक्रप्रदं वस्तिविशुद्धिहेतुं जेतुं समर्थं पवमानपित्ते ।
कूष्माण्डमुत्कृष्टमिहाखिलानां वल्लीफलानां भिषजो वदन्ति ॥ २८ ॥

गुरुरूक्षमलावुशीतलं त्रपुसं पित्तहरञ्च मूत्रलम् ।
मधुरं तुवरं सतिक्तकं मतमाध्मानकरं करीरकम् ॥ २९ ॥

पवमानहरोऽम्लपित्तकर्ता कटुतीक्ष्णो गुरुरीषदुष्णवीर्यः ।
कफवातगुदाङ्कुरेषु शस्तस्तनुते श्लेष्मवलानलान् पलाण्डुः ॥ ३० ॥

अर्शस्त्रिदोषाऽरुचिजन्तुहारि विस्रंसनं बुद्धिवलाग्निकारि ।
क्षारं विपाके कटुवास्तुकं स्यात् तद्वच्च चिल्ली लघुपत्रयुक्ता ॥ ३१ ॥

सञ्जीवनी कण्ठकृशाक्षिपथ्या रसायनी मस्करिणामपथ्या ।
जीवन्त्यनुष्णा मधुरा च गुर्वी शाकेषु गुर्वी जयति त्रिदोषान् ॥ ३२ ॥

पालक्यां त्विति वर्णयन्ति सुधियो गुर्वीं सरां पिच्छिलां
शीतां श्लेष्मकरीं च, चञ्चुकमपि ग्राहि स्मृतम्पिच्छिलम् ।

कौसुम्भं गुरुपित्तकारि कथितं रूक्षाम्लमम्लं रसं
शाकं स्याच्चणकोद्भवन्तु मधुरं पाके रसे दुर्जरम् ॥ ३३ ॥

लोणीका कफवातहृत्सलवणा स्वाद्वी च गुर्वी पुनः
सूक्ष्मा मूत्रमलप्रवर्तनकरी विष्टभ्य जीर्णा भवेत् ।
स्वर्यामं निखिलं निकृन्तति गुरूष्णं तथा सार्षपम्
मूत्रे दोषकरं, सरा मदहरा गुर्वी स्मृता पोदकी ॥ ३४ ॥

पवनकृत्कफपित्तनिषूदनं गुरु कलायजशाकमुदाहृतम् ।
मुनितरोः कुसुमञ्च निशान्ध्यनुत् किमपि शीतमशीतमपि स्मृतम् ॥ ३५ ॥

अश्ववला कथिता किल रूक्षा मूत्रबलानिलबन्धनकर्त्री ।
पावकपुष्टिकरः कटुतीक्ष्णः शोथहरोऽथ सरो मधुशिग्रुः ॥ ३६ ॥

गुदकीलहरा त्रिदोषजिन्मतिमुच्छोधयितुं विचक्षणा ।
अतिसारहरा रुचिप्रदा शतपुष्पा ज्वरिणां प्रशस्यते ॥ ३७ ॥

बृहच्छताह्वा वृष्या च क्षतक्षीणहिमा लघु ।
आस्याक्षि वातपित्तास्रक्षयघ्नी स्वादु तिक्तका ॥ ३८ ॥

रुचिकृत् कफनुद् विशदश्चलघुर्जठरस्थकृशानुकृशत्वहरः ।
अतिपथ्यतमो गुदकीलवतामिति कन्दगुणानवदन्मुनयः ॥ ३९ ॥

आर्द्रा कुस्तुम्बरी कुर्यात्स्वादु सौगन्ध्यहृद्यथा ।
शुष्का स्निग्धा स्वादुपाका कषाया कटुका लघु ॥ ४० ॥

गृञ्जनं मधुरं पाके तीक्ष्णोष्णं तिक्तकं लघु ।
ग्रहण्यर्शोऽनिलश्लेष्मा हृच्छुक्राऽरुचिजन्तुजित् ॥ ४१ ॥

लशुनः कटुकः पाके रसे स्निग्धो गुरुः सरः ।
तिक्तोष्णो मधुरो हृद्यो वृष्यो बृंहणपाचनः ॥ ४२ ॥

शुक्लाजाजी च जरणी जरणं जीरकं स्मृतम् ।
जीरकं दीर्घकं मध्ये पित्तलं चोत्तरा पथि ॥ ४३ ॥

कृष्णाजाजी कणा काली सुगन्धा कृष्णजीरकम् ।
उद्गारशोधनं हृद्यं कटूष्णं दन्तशोधनम् ॥ ४४ ॥

कृष्णजीरं परं तिक्तं तद्वद् रक्तं तु पित्तलम् ।
रूक्षं विषहरं लेपादुभयं वनसम्भवम् ॥ ४५ ॥

आम्लको ग्राहकश्चोष्णः कटीपवनदोषजित् ।
मेध्यः शाकवरश्चैव वह्निवृद्धिकरः परः ॥ ४६ ॥

बालमूलकमल्पाम्लं क्षारतिक्तोषणं लघु ।
रोचनं दीपनं स्वर्यमुष्णं हृद्यं त्रिदोषजित् ॥ ४७ ॥

रक्तमूलन्तु वर्चस्कं म्लेच्छभक्षणमीरितम् ।
शुष्कमूलं पथ्यतमं विशेषाद् घृतभर्जितम् ॥ ४८ ॥
हिङ्गु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् ।
अगूढगन्धं बाल्हीकं जरणं सूपधूपनम् ॥ ४९ ॥
हिङ्गूग्रं वह्निमान्द्यघ्नं पाचनं कफवातजित् ।
कटुतिक्तरसं तीक्ष्णं भूतघ्नं शूलनाशनम् ॥ ५० ॥
तुवरश्च कुबेराक्षं तिक्तकं रसपाकयोः ।
कफवातामयान् हन्ति सर्वशूलहरश्च तत् ॥ ५१ ॥
नादेयी श्वेतपुष्पा च श्वेतमञ्जरिका शुभा ।
कोष्ठवातापहन्त्री च गुल्ममान्द्यकफापहा ॥ ५२ ॥
नादेयी कटुका तिक्ता वीर्योष्णा ह्यामपाचनी ।
मलानां शोधनी पथ्या वस्तिशोधनकारिणी ॥ ५३ ॥
प्रसारिणी भद्रपर्णी चारुपर्णी प्रतापनी ।
प्रसारिणी कषायोष्णा वातशोफार्शहृत्सदा ॥ ५४ ॥
कुजरूपा कुजवल्ली डिकेमाली च संस्मृता ।
डिकेमाल्यास्तु पञ्चाङ्गं कटुकं रसपाकयोः ॥ ५५ ॥
नानाविधक्रिमीन् हन्ति वह्निदीप्तिकरं परम् ।
कफवातहरं रुच्यं सरं वातानुलोमनम् ॥ ५६ ॥
विसूच्यामति पथ्यन्तु भेषजं समुदाहृतम् ।
महौषधं मलहरं रामठेन समं मतम् ॥ ५७ ॥
निम्बूरसेन सञ्चूर्ण्य ह्यजीर्णं हरति क्षणात् ।
एतच्चूर्णं निम्बुमध्ये पक्त्वा हन्ति विसूचिकाम् ॥ ५८ ॥
धूमाख्यो धूमवृक्षश्च बृहत्पत्रश्च धूसरः ।
तमाखू गुच्छफलको धूमयन्त्रप्रदर्शकः ॥ ५९ ॥
बहुबीजो बहुफलः सूक्ष्मबीजश्च दीर्घकः ।
दीर्घपाटलवर्णश्च पुष्पं तस्य प्रकीर्तितम् ॥ ६० ॥
तस्य पत्रं तीक्ष्णमुष्णं कफवातहरं परम् ।
श्वासकासहरञ्चैव कोष्ठवातहरन्तथा ॥ ६१ ॥
वातानुलोमनकरं वस्तिशोधनमुत्तमम् ।
दन्तरुक्शमनञ्चैव क्रिमियूकादिनाशनम् ॥ ६२ ॥
मदपित्तभ्रमकरं वामकं रोचनं स्मृतम् ।
दृष्टिमान्द्यकरं चैव क्षीणशुक्रकरं परम् ॥ ६३ ॥

तस्यैव धूमपानेन विशेषाद् दृष्टिशुक्रहृत् ।
देशान्तरप्रभेदेन तीक्ष्णश्चातीव पित्तलम् ॥ ६४ ॥

वमनस्य प्रभावेण वृश्चिकादिविषं हरेत् ।
रचनाद् वा हरेद् वातं श्लेष्माणञ्च विनाशयेत् ॥ ६५ ॥

भङ्गिका पित्तला तिक्ता तीक्ष्णोष्णा ग्राहिणी लघु ।
कषाया दीपनी रुच्या मदकृत् कफवातनुत् ॥ ६६ ॥
शिंशिपा तुवराऽम्ला तु मलश्लेष्मनिकृन्तनी ।
कषाया मलशूलादिशोधनी च परा मता ॥ ६७ ॥

आभावब्बुलिका चैव कुकुटी दीर्घशिम्बिका ।
रसे पाके च तुवरा तिक्ता मेहविषापहा ॥ ६८ ॥
रुचिप्रदा कटूष्णा च दुर्नामकफवातहा ।
तस्याः पत्रं कषायश्च परुषं श्वासकासजित् ॥ ६९ ॥

कुमारी शीतला तिक्ता मधुरा भेदिनी तथा ।
ग्रन्थ्यग्निदग्धविस्फोटरक्तपित्तविकारनुत् ॥ ७० ॥
गुल्मप्लीहोदराण्येव कामला पाण्डुरोगजित् ।
चक्षुष्या विषदोषघ्नी बल्या वृष्या रसायनी ॥ ७१ ॥

उच्चटा कटुकोष्णा च कफशोफानिलापहा ।
शुक्रस्तम्भकरा वृष्या मेहघ्नी बहुमूत्रजित् ॥ ७२ ॥
चुक्रं स्वाद्वम्लपत्रन्तु क्षारञ्च क्षुत्प्रदीपनम् ।
हृद्यं पित्तकरं रुच्यं कफमारुतजिन्मतम् ॥ ७३ ॥

उपोदकाऽपरा गुर्वी पिच्छिला रक्तपित्तजित् ।
क्षुपोपोदकनाम्नी च तद्गुणाः पोतकीसमाः ॥ ७४ ॥
वनोद्भवा मल्लिका च क्षीरिणी वल्लिरूपधृक् ।
तिक्तमूला लघुर्बल्या मुखरोगहरा स्मृता ॥ ७५ ॥
हरित्पर्णा श्वेतपुष्पा यवानी कथिता बुधैः ।
महातीक्ष्णा तीक्ष्णफला बृहत्सूक्ष्मफला तथा ॥ ७६ ॥

परन्तु वह्निजननी कफकोष्ठामशूलहृत् ।
खुरासनप्रदेशे तु तीक्ष्णं सूक्ष्मं फलं स्मृतम् ॥ ७७ ॥
शृङ्गाटकः शोणितपित्तहारी लघूरसे वृष्यतमो विशेषात् ।
त्रिदोषतापापहमग्निहारी रुचिप्रदो मेहनदार्ढ्यकारी ॥ ७८ ॥

डंगरी शीतला रुच्या दाहपित्तास्रदोषजित् ।
शोषहृत्तर्पणी बल्या जाड्यहा मूत्ररोधनुत् ॥ ७९ ॥

बालं डाङ्गरिकाफलं समधुरं शीतञ्च पित्तापहं
तृष्णादाहनिवर्हणं च रुचिकृत् सन्तर्पणं पुष्टिदम् ।
वीर्योन्मेषकरं लघुप्रबलदं भ्रान्तिभ्रमध्वंसनं
पक्वं चेत् कुरुते तदेव मधुरं तृड्दाहरक्तं गुरु ॥ ८० ॥

मृगाक्षी कटुका तिक्ता पाकेऽम्ला वातनाशिनी ।
पित्तकृत् पीनसंहारी दीपनी रुचिकृत्परा ॥ ८१ ॥

कलिङ्गो मधुरः शीतो दाहपित्तश्रमापहः ।
वृष्यः सन्तर्पणो बल्यो वीर्यपुष्टिविवर्धनः ॥ ८२ ॥

खर्बुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ।
स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ॥ ८३ ॥

तेषु यच्चाम्लमधुरं सक्षारं च रसाद् भवेत् ।
रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम् ॥ ८४ ॥
निष्पावकौ हरिच्छुभ्रौ कषायमधुरौ रसौ ।
कण्ठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ ॥ ८५ ॥

पनसस्य फलं बालं कषायं मधुरं गुरु ।
मदःश्लेष्मकरं बल्यं तृड्दाहानिलपित्तजित् ॥ ८६ ॥

पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् ॥ ८७ ॥
वार्ताकी कटुका रुच्या मधुरा पित्तनाशिनी ।
बलपुष्टिकरी हृद्या गुरुर्वातेषु निन्दिता ॥ ८८ ॥

लवणमरिचचूर्णेनावृतं रामठाढ्यं
दहनवदनपक्वं कञ्चुकान्तं नितान्तम् ।
हरति पवनसङ्घं श्लेष्महर्तृ प्रसिद्धं
जठरभरणयोग्यं चारुभोज्यं भरित्थम् ॥ ८९ ॥
वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् ।
कफमेदोऽनिलामघ्नमत्यर्थं लघुदीपनम् ॥ ९० ॥

भेण्डा त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ।
आमन्तु कौतुकं रुच्यं कफपित्तकरं गुरु ॥ ९१ ॥
अन्नन्त्वरोचकं हृद्यं श्रमक्लमनिवर्हणम् ।
पक्वन्तु पित्तहृत् स्वादु रस्यमातपदोषनुत् ॥ ९२ ॥

ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित् ।
बुद्धिं प्रज्ञाञ्च मेधाञ्च कुर्यादायुः प्रवर्धिनी ॥ ९३ ॥

गोलोमिका कटुस्तिक्ता त्रिदोषशमनी हिमा।
मूत्ररोगास्रदोषघ्नी ग्राहिणी दीपनी च सा ॥ ९४ ॥
पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम्।
फलं त्रिदोषशमनं मूलं तस्य विरेचकम् ॥ ९५ ॥
औदुम्बरं फलमतीव सुशीतलञ्च सद्यो निवारयति शोणितपित्तमुग्रम्।
पथ्यं विषे विषमपित्तशिरोविकारे नासाप्रवृत्तरुधिरेषु विशेषमस्तु ॥ ९६ ॥
औदुम्बरं कषायं स्यात् पक्वन्तु मधुरं हिमम्।
कृमिहृत् पित्तहृच्चैव मूर्च्छादाहतृषापहम् ॥ ९७ ॥
मधुरो मधुजम्बीरः शिशिरः कफपित्तनुत्।
शोषघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः ॥ ९८ ॥
बीजपूरफलमम्लकटूष्णं श्वासकासशमनं पवनघ्नम्।
कण्ठशोधनकरं लघु हृद्यं दीपनञ्च रुचिकृत्पचनञ्च ॥ ९९ ॥
तूदं गुरु सरं चाम्लमामं तद्रक्तपित्तलम्।
उष्णं पक्वन्तु मधुरं शीतपित्तानिलापहम् ॥ १०० ॥
तूदश्च लघु सङ्ग्राहि साम्लोष्णं वह्निपित्तकृत्।
स्निग्धं पक्वन्तु मधुरं कषायं कफवातजित् ॥ १०१ ॥
हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत्।
मेहकण्डूव्रणान् हन्ति हेमवर्णविधायिनी ॥ १०२ ॥
वास्तुकं सुमधुरञ्च शीतलं क्षारमम्लमपि दोषजित् परम्।
रोचनं ज्वरहरं महार्शसां नाशनञ्च मलमूत्रशुद्धिकृत् ॥ १०३ ॥
पुष्करः पुष्टिकृद् रुच्यः पित्तघ्नः शीतलश्च सः।
किञ्चिदुष्णः शुक्लवर्णो हन्ति वातकफज्वरान् ॥ १०४ ॥
तीक्ष्णकण्टस्य निर्यासस्तीव्रसारो हि वृक्षजः।
तीव्रसारो हिमो वृष्यस्तृड्दाहशमनो लघुः ॥ १०५ ॥
पटुः स्वादुः कषायश्च रसे पाके कटुस्तथा।
विसूचिकामलसकं हन्यादग्निविवर्धनः ॥ १०६ ॥
मेहारिवृक्षो मेहघ्नस्तस्य सारो हिमो लघुः।
मूत्रदोषहरो वृष्यः कषायः स्वादुतिक्तकः ॥ १०७ ॥
वव्वूलस्य वसा स्वाद्वी कषाया बृंहणी मता।
कटिशूलञ्च पित्तञ्च हन्याद् वीर्यविवर्धिनी ॥ १०८ ॥
शालयो मधुराः स्निग्धा बल्या बद्धाऽल्पवर्चसाः।
कषाया लघवो रुच्याः स्वर्या वृष्याश्च बृंहणाः ॥ १०९ ॥

स्थिरहिममधुरो विट्बन्धकृल्लघुरूक्षो
जयति सकलदोषान् षष्टिको व्रीहिराजः ।
द्विदलवरमपीषद् वातलं मुद्गमाहुः
प्रवलयति नितान्तं भीमतातं कलायः ॥ ११० ॥

कषायो मधुरो रूक्षो नीवारः कफपित्तहृत् ।
ग्राही लघुर्बलहरो मुनीनां प्राणधारकः ॥ १११ ॥

मुद्गास्तत्र वराः स्वादुकषायाः कटुपाकिनः ।
ग्राहिणोऽल्पबला रूक्षा रोचना लघवो हिमाः ॥ ११२ ॥

रूक्षः क्षिणोति चलकृच्चणकोऽम्लपित्तं
वातप्रकोपनकरी तुवरी तु किञ्चित् ।
पित्तं कफं हरति सैव घृतेन युक्ता
भुक्ता समीरमपि संहरते क्षणेन ॥ ११३ ॥

माषः स्निग्धो मारुतघ्नो गुरूष्णो वर्चः पित्तश्लेष्मकृत् सारहेतुः ।
शुक्राधिक्याद् द्रावकर्ता सरः स्यात् काकाण्डोलाऽप्यात्मगुप्ताऽपि तद्वत् ।११४।
रूक्षो गुरुर्बहुशकृच्चलकृच्चशिम्बी धान्याधमस्त्वमसि नागर एव मिथ्या ।
रे राजमाष ! तव राजपदं प्रदत्तं माषं विहाय विधिना तदहष्टमेव ॥११५॥

सन्धानकृत्सुमधुरो गुरुशीतवीर्यो वृष्यस्थिरत्वजननो जनजीवनश्च ।
स्निग्धः सरः पवनपित्तजये प्रयोज्यः कस्य प्रियो न सुमनः सुमनस्थलेऽपि ॥

स्निग्धो वर्ण्यबलाग्निवृद्धिजननः स्तन्योऽनिलघ्नो गुरुः
सोऽष्णः पित्तकरोऽथ मूत्रजननः केश्योऽपि पथ्यो व्रणे ।
ग्राहिस्यान्मधुरः कषायसहितस्तिक्तो विपाके पटुः
कृष्णः पथ्यतमः सितोऽल्पगुणदः क्षीणास्ततोऽन्ये तिलाः॥११७॥

उष्णस्त्वच्यः केश्यो मतिकफशुक्राग्निकृत् कटुः पाके ।
बल्योऽल्पमूत्रकारी शीतस्पर्शो गुरुस्तिलो ज्ञेयः ॥११८॥
आनाहमेदागुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ।
कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः॥११९॥

मकुष्ठकः कषायः स्यान्मधुरो रक्तपित्तजित् ।
ज्वरदाहकरः पथ्यो रुचिकृत्सर्वदोषनुत् ॥ १२० ॥
यावनालो देवधान्यो जूर्णाऽरव्यो जुन्हलो मतः ।
दीर्घनालो जूर्णकः शिखरी बीजपुष्पकः ॥ १२१ ॥
कषायो मधुरो रूक्षो रक्तपित्तकफापहः ।
वृष्यः शुक्रकरो हृद्यो ह्यग्निवृद्धिकरः सरः ॥ १२२ ॥

चारुको बहुशूकश्च स्तब्धधान्यश्च दीर्घकः ।
वंशयवश्चाति दीर्घो दीर्घशीर्षः कृशः स्मृतः ॥ १२३ ॥
बहुशूकस्तीक्ष्णशूको ह्यङ्कोटः स्वादु शुक्रकृत् ।
मरुदेशोद्भवश्चैव प्रवरश्चान्यदेशतः ॥ १२४ ॥
जातः स गुरुसो नाम पाके गुरुतरः स्मृतः ।
अरुच्यो लघुशीतश्च व्रणशोफकरः परः ॥ १२५ ॥
रूक्षः कषायः स्वादुश्च सर्ववातप्रकोपनः ।
आध्मानकारकश्चैव रक्तपित्तहरः स्मृतः ॥ १२६ ॥
सतीनो मधुरः पाके रसे रूक्षो हिमो लघुः ।
कषायो वर्तुलो ग्राही कफपित्तनिषूदनः ॥ १२७ ॥
मसूरा मधुराः पाके कषाया ग्राहिणो हिमाः ।
लघवो वातला रूक्षा रक्तपित्तकफापहाः ॥ १२८ ॥
वर्ण्या वातोल्वणा वल्यास्तेषां शाकं सतिक्तकम् ।
ऋते मुद्गान् मसूरांश्च त्वन्ये चाध्मानकारकाः ॥ १२९ ॥
आढकी तुवरी चाथ कालवृन्ता कुलत्थिका ।
तुवरी तुवरा सूक्ष्मा मधुरा शीतला लघु ॥ १३० ॥
ग्राहिणी वातला वर्ण्या कफपित्तविषापहा ।
त्रिदोषशमनी पथ्या कृमिघ्नी चाढकी तथा ॥ १३१ ॥
तृणधान्यं लघूष्णश्च कटुपाकं कषायकम् ।
लेखनं मधुरं रूक्षमवृष्यं क्लेदशोषणम् ॥ १३२ ॥
पित्तलं वातलं बद्धमलरक्तकफापहम् ।
तत्फलं मधुरं रूक्षं प्रियङ्गुर्दुर्जरी मता ॥ १३३ ॥
प्रियङ्गुर्भग्नसन्धानवातकृद् बृंहणी मता ।
कृष्णा रक्तास्तथा श्वेताः पीताश्चैव प्रियङ्गवः ॥ १३४ ॥
कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः ।
श्यामाकाः पित्तहाः शीताः कोद्रवा विषपित्तहाः ॥ १३५ ॥
नर्तकश्चक्रशस्यस्यान् निःशूकोऽथ भरःखरः ।
नर्तकश्च हिमो वल्यस्तर्पणो दोषहृल्लघु ॥ १३६ ॥
वरकः पित्तहा शीतो वनव्रीहिः कफापहः ।
वरको मधुरो रूक्षः कषायो वातकारकः ॥ १३७ ॥
यवः शूकस्तीक्ष्णशूको यवो वाजिप्रियः शुचिः ।
निःशूकोऽति यवो ज्ञेयः स्तोक्यस्तु हरितो यवः ॥ १३८ ॥

हीनो यवादनुयवस्तोक्यो हीनतरः स्मृतः ।
यवः स्वादुतरो रूक्षो वल्यो वृष्यो हिमो गुरुः ॥ १३९ ॥
मृदुवर्णोऽनभिष्यन्दी कटुपाकः कषायकः ।
स्वर्य्योऽग्निदीपनो वर्ण्यो बद्धमूत्रः सपिच्छिलः ॥ १४० ॥
मेधावातशकृत्स्थैर्यंकरः स्थौल्यविलोपनः ।
निहन्ति कफवातास्रमेहतृष्णात्वगामयान् ॥ १४१ ॥
शालयः पूर्वमार्द्रान्नमृष्टा अस्फुटिताः पुनः ।
कुट्टिताश्चिपिटाः सम्यक् ते स्मृताः पृथुका इति ॥ १४२ ॥
पृथुका गुरवो वातनाशनाः श्लेष्मला अपि ।
सक्षीरा बृहणा वृष्या वल्या भिन्नमलाश्च ते ॥ १४३ ॥
यावनालो महान् वल्यो दुर्जरो वातपित्तकृत् ।
रुच्यः सन्तर्पणो बालप्रियो मक्कासमुद्भवः ॥ १४४ ॥
लाजास्तु मधुराः शीता लघवो दीपनाश्च ते ।
स्वल्पमूत्रा अल्परूक्षा वल्याः पित्तकफच्छिदः ॥ १४५ ॥
तृणानलेन सम्भृष्टा बुधैरुर्वीति सा स्मृता ।
उर्वी कफप्रदा बल्या लघ्वी पित्तानिलापहा ॥ १४६ ॥
तथा सुभृष्टचणको वातघ्नो रक्तदोषकृत् ।
वीर्येणोष्णो लघुश्चैव स्वेदशैत्यापहारकः ॥ १४७ ॥

निद्रादार्ढ्यबृहत्वकृद् गुरुतरश्चोष्णो लुलायः स्मृतः
कोलस्तद्वदरोचकः श्रमहरः शुक्रं वलं वर्धयेत् ।
मेधाशुक्रबलाग्निकृद् बहुमरुद्दोषत्रयघ्नः पर
वर्ण्यो ग्राह्यपि तित्तिरो हिततरो मत्स्याः परं श्लेष्मलाः ॥१४८॥
सर्वदोषशमनस्तु लावकः पावकद्रढिमकृद् बलप्रदः ।
स्निग्धमारुतहृतश्च शुक्रलाः श्लेष्मलाश्च चटकाः प्रकीर्तिताः ॥१४९॥
बलस्तन्यकृच्छ्वासकासाधिक्षुत्तृट् क्षतक्षीणपथ्यं मरुत्पित्तहारी ।
पुराणज्वरे मूत्रकृच्छ्रेऽस्रपित्ते पिवेद् गव्यदुग्धं सर जीवनीयम् ॥१५०॥
मदश्रमभ्रमापहं विशेषशुक्रवर्धनम् ।
प्रसादपुष्टिदं पयः पिबन्ति पुण्यकारिणः ॥१५१॥
श्वसनज्वरयक्ष्मरक्तपित्तातिसृतिघ्नं लघुदुग्धमाजमाहुः ।
प्रबलानलनष्टनिद्रपथ्यं रसयुक्तं गुरु माहिष हिम स्यात् ॥१५२॥
औष्ट्रं लघिष्ठं कृमिक्षुत्क्षयार्शो वातश्लेष्मानाहशोफोदरेषु ।
रूक्षक्षारं किञ्चिदुष्णं प्रदिष्टं देहे दार्ढ्यं गाढमेभ करोति ॥१५३॥

बल्य हृद्यं त्वाविकं वातकासं पित्तश्लेष्मश्वासकासप्रदं स्यात् ।
स्रोतःस्रावि क्षीरमामं गुरुस्यात् पथ्यं चोष्णं चाविदुग्धं घृतञ्च ॥१५४॥
अम्लरसं लवणं लघुशाखामारुतजिज्जडताकरमुष्णम् ।
ऐकशफं, सुदृशां त्वभिघातासृक्चलपित्तगुदामयनुत्स्यात् ॥१५५॥
अम्लपाककरमौष्ण्यभृद् गुरु ग्राह्यरोचकसमीरणापहम् ।
रक्तपित्तबलशुक्रपावकं स्थौल्यशोफकफदं दधि स्मृतम् ॥१५६॥
अरुचिहरप्रशस्तं पाण्डुमूत्रावरोधो ग्रहणिगुदजगुल्मप्लीहशोफोदरेषु ।
चलकफहरमुष्णं रूक्षमम्लं कषायं पिबति खलु नरो यस्तत्र लघ्वग्निकारि ॥१५७॥
तक्रतत्परतया सुधांधसः कुर्वते सुरभिसंग्रहं सदा ।
तत्समं सुलघु मस्तु शोधनं स्रोतसां चलमलाऽनुलोमनम् ॥१५८॥
यथा सुराणाममृतं प्रधानं तथा नराणां भुवि तक्रमाहुः ।
अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः ॥१५९॥
नवनीतमिदं नवमेव हितं हिमशुक्रबलानलकान्तिकरम् ।
ग्रहणात्मकमर्दितपित्तमरुद्गुदजक्षतजक्षयकासहरम् ॥१६०॥
प्रक्वणद् वलयवल्गुहस्तया कान्तया दयितभाजनेऽर्पितम् ।
येन नूतनघृतं न भक्षितं पापमेव खलु तेन भक्षितम् ॥१६१॥
आयुर्मतिस्मृतिधृतिद्युतिकारिबाल-
वृद्धस्वराथिषु हितं बलशुक्रदायि ।
पुष्ट्यग्निकृत्स्वरपित्तहृदक्षिशस्तं
शीतज्वरापहमनन्तगुणं घृतं स्यात् ॥१६२॥
क्षीरे कटाहे तापेन घनीभूते सितायुते ।
एलालवङ्गमरिचं यथायोग्यं विनिक्षिपेत् ॥१६३॥
पिण्डिकास्तर्पणा वल्या वृष्याः स्युः पित्तनाशनाः ।
वातघ्नाश्च विशेषेण क्लमश्रमनिवारणाः ॥१६४॥
अभुक्ते पित्तहन्तारो भुक्ते पित्तप्रकोपनाः ।
भुक्तिमध्ये गुरुतमा इतीक्षूणां गुणास्त्रयः ॥१६५॥
पीयूषोपमितं त्रिदोषशमनं स्याद्यन्त्रनिष्पीडितं
तद्वच्च ग्रहदन्तजं तदपरं विष्टम्भि गुर्वग्निकृत् ।
किञ्चित् कालधृतञ्च वातजननं जाड्यप्रतिश्यायदं
प्रोक्तं पर्युषितं कफानिलकरं पानीयमिक्षूद्भवम् ॥१६६॥
इक्षोर्गुडो मधुरसो गुरूष्णः कफवातजित् ।
अहितः पित्तरक्ते च जीर्णश्चैव रसायनम् ॥१६७॥

पित्तघ्नः पवनार्तिजिद्रुचिकरो हृद्यस्त्रिदोषापहः
संयोगेन विशेषतो ज्वरहरः सन्तापशान्तिप्रदः ।
विण्मूत्रामयशोधनोऽग्निजननः पाण्डुः प्रमेहान्तकः
स्निग्धः स्वादुतरो लघुश्रमहरः पथ्यः पुराणो गुडः ॥ १६८ ॥
स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणक्षयेऽरोचके
चक्षुष्या बलवृंहणी सुमधुरा रूक्षा च वंशेक्षुजा ।
वृष्या तृप्तिबलप्रदा श्रमहरा काण्डेक्षुजाशीतला
स्निग्धा शान्तिकरी च गर्भजनिता रक्तेक्षुजा पित्तजित् ॥ १६९ ॥
वाग्भटस्य मतमस्ति समस्तं सुश्रु तस्य चरकस्य च किञ्चित् ।
तद्वदत्रितनयस्य विचित्रा वाग्विलासरचना मम तावत् ॥ १७० ॥
अवरन्यक्कृतविम्बा जितशशिविम्बा मुखप्रभया ।
गमने सुखदविलम्बा विपुलनितम्बा शिवा शिवं कुर्यात् ॥ १७१ ॥
समस्तपृथ्वीपतिपूजनीयो दिगङ्गनाऽऽश्लिष्टयशःशरीरः ।
गुणिप्रियं ग्रन्थममुं व्यातानील्लोलिम्बराजः कविपातशाहः ॥ १७२ ॥

इति दुन्दुभिनामसंवत्सरे फाल्गुनशुद्धद्वादश्यां
मन्दवासरे श्रीमल्लोलिम्बराजविरचितो
वैद्यावतंसः
समाप्तः

# चमत्कारचिन्तामणिः

## अथ प्रथमो विलासः

लीलावति लताकल्पे कल्पनालि सुसङ्गमे
करोतु विघ्नं विघ्नानां विघ्नानां नायकस्तव ॥ १ ॥

बाले चञ्चलकोमले सुवदने ते शैलतुल्यौ स्तनौ
तुल्यं मे कुसुमैर्वपुर्दृढतरं मा मा त्वमालिङ्ग माम् ।
यद्यालिङ्गसि मां बलादहमिदं सर्वं यशोदाऽग्रतो-
वक्ष्यामीति भणन् हसन् भवभयाल्लक्ष्मीपतिः पातु माम् ॥ २ ॥

मां हित्वाऽन्यवधूं प्रयासि भगवन्नैतन्मृषा वत्सले
चेत्सत्यं प्रभवेदिद यदुपते तर्हि प्रसन्नानने ।
त्वद्वक्षोरुहशैलराजशिखरात् पातं करिष्ये क्षणात्
नान्यत्किञ्चिदिति श्रमं हरतु मे राधाच्युतोक्तं वचः ॥ ३ ॥

कयाचित्कामिन्या कुचकनककुम्भे विनिहितं
कयाचित्संभुक्तं घनतमतमःस्तोमगहने ।
स्मरामस्तं बालं कुवलयदलश्यामलतनुं
त्रिमूलं चिल्लक्ष्यं कलिकलुषकल्लोलदलनम् ॥ ४ ॥

नमामि मानिनं रामं निर्ममं राममारमम् ।
नुन्नराम मनोमानं नरनारीमनोरमम् ॥ ५ ॥

आत्रेयहारीतपराशराणां भोजेन भेडेन समन्वितानाम् ।
तन्त्राणि चित्राणि मनोहराणि चातुर्यपूर्णानि निरीक्ष्य सम्यक् ॥ ६ ॥

दिवाकरप्रसादेन रोगारोग्यैकहेतवे ।
रचयामश्चमत्कार-चिन्तामणिमणियसम् ॥ ७ ॥

परीक्षेत रोगस्य लिङ्गानि तावत्ततोऽनन्तरं भेषजं च प्रदद्यात् ।
इति व्याधिविद् यश्चिकित्सां प्रकुर्याद्भवेत्तस्य सिद्धिश्च निःसंशयेन ॥८॥

सकलशास्त्रपुराणविदप्यहो गदनिदानचिकित्सितयोः पटुः ।
उदधिजन्मकरः सुकृताकरः सकरुणोऽकरुणोऽभिमतो भिषक् ॥ ९ ॥

श्रुतं क्वचिद्वा द्रविणं क्वचिद्वा मैत्री क्वचिद्वा सुयशः क्वचिद्वा ।
ज्ञानं क्वचिद्वा प्रभुता क्वचिद्वा चिकित्सितं निष्फलमेव न स्यात् ॥१०॥

अमृताच्युतकौस्तुभान्सुमध्ये सह धन्वन्तरिणा गरुत्मतापि ।
स्मरता यदि भेषजं गृहीतं गदिना तस्य किमस्ति तर्हि दुःखम् ॥ ११ ॥

न ग्राह्यं मूर्खभिषजो भेषजं प्राज्ञरोगिभिः ।
गृहीतं यदि कञ्जाक्षि ! जनयेत्तद् गदान्तरम् ॥ १२ ॥

पथ्ये सति विकारस्य प्रतीकारो वृथा भवेत् ।
पथ्येऽसति विकारस्य प्रतीकारो वृथा भवेत् ॥ १३ ॥

इह गमिष्यति वैद्यमतिः श्रमं प्रथममेव पुरस्तु महासुखम् ।
प्रियतमस्य नवीनसमागमे नवकरग्रहणा गृहिणी यथा ॥ १४ ॥

त्रैलोक्यस्य महेश्वरेण सकलज्ञानस्य पाथोधिना
रुद्रेणापि न शक्यते क्षपयितुं दृष्टः सुधांशोः क्षयः ।
अस्माकं यदि शास्त्रकिञ्चनधियां स्वस्वामिनां नो प्रती-
कारः स्याद् गलितायुषां गुणिगणान्नो हानिरित्युच्यताम् ॥१५॥

यतः सर्वेषु रोगेषु प्रायशो बलवाञ्ज्वरः ।
ततस्तस्य प्रतीकारं प्रथमं ब्रूमहे वयम् ॥ १६ ॥

आमाशये संस्थित आमसंयुतः स्रोतांसि सर्वाणि हुताशनं तथा ।
निरुध्य दोषः कुरुते ज्वरं यतस्ततो विधेयं प्रथमं च लङ्घनम् ॥ १७ ॥

लाजाशुण्ठीकणामुस्तासैन्धवोशीरदाडिमैः ।
वातानुलोमनो मण्डो दीपयेदाशुशुक्षणिम् ॥ १८ ॥

रुचिरोरुस्तनश्रोणि तरुणज्वरिणे घृतम् ।
परसंसर्गसंसक्तं कलत्रमिव साधवः ॥ १९ ॥

भो भो पयोधरधराधरभारखिन्ने चेतोहरे सकलकामकले सुशीले ।
विश्वासधान्यबृहतीद्वयदेवकाष्ठैःस्यात्पाचनं प्रथमतो ज्वरनिर्जितानाम् ॥२०॥

छिन्नौषधाम्भोधरधन्वयासैः किराततिक्ताम्बुदरेणुयासैः ।
मुस्ताटरूषौषधधन्वयासैः क्वाथो मरुत्पित्तकफज्वरेषु ॥ २१ ॥

पयोवाहभूनिम्बकोशीरकाणां स्थिरासिंहिकायुक् कलस्यौषधीनाम् ।
गुडूची-त्रिकण्ट-प्रयुक्तः कषायो नरं सज्वरं निर्ज्वरं चर्करीति ॥ २२ ॥

विशालभालूरकुचाभिरामे सुपल्लवे वल्लरि काञ्चनस्य ।
दिलीपपत्नीचरणौ विमोक्षो लोको हनूमज्जनके ज्वरे स्युः ॥ २३ ॥

छिन्नोद्भवापर्पटवारिवाहभूनिम्बशुण्ठीजनितः कषायः ।
समीरपित्तज्वरजर्जराणां करोति भद्रं खलु पञ्चभद्रः ॥ २४ ॥

अनन्तादिं भजेत्तावद् यावत्तापः प्रशाम्यति ।
संशयो नैव कर्तव्यः सत्यं सत्यं पुनः पुनः ॥ २५ ॥

स्वयमेव च पैत्तिकं ज्वरं शमयेत् पर्पटजः कषायकः ।
यदि चन्दनसेव्यनागरैः सहितः किं पुनरत्र चिन्तया ॥ २६ ॥

मायुश्च मदकृद् वायुर्ज्वलन्मणिमनोहरे ।
रेवातीरे यतो वेणुक्वाणोऽस्त्यत्र हृतव्यथः ॥ २७ ॥
जलजजलजवाहं हरहर हरति ज्वरम् ।
प्रवलनिदाघवमी निपीयमानं प्रिये नूनम् ॥ २८ ॥
लोहितचन्दनपद्मकधान्यच्छिन्नरुहापिचुमन्दकषायः ।
पित्तकफज्वरदाह पिपासा छर्दिविनाशहुताशकरः स्यात् ॥ २९ ॥
सहस्रधौतेन धृतेन कर्तुरभ्यङ्गमोषः कृशतां बिभर्ति ।
अन्याङ्गनासङ्गमसादरस्य स्वीयेषु दारेषु यथाभिलाषः ॥ ३० ॥
द्राक्षारग्वधयोः क्वाथः पीतः पित्तज्वरापहः ।
पर्पटाब्दामृतातिक्ता युक्तश्चेत् किं सुधा ततः ॥ ३१ ॥
अतिमञ्जुलवञ्जुलानिलैरलिनीसंकुलचञ्चलोत्पलैः ।
जलकेलिकलाकुतूहलैरपि पित्तज्वरजा रुजो जयेत् ॥ ३२ ॥
सुकलत्रकलत्रपुत्रमित्रैः सुचरित्रैर्जलयन्त्रकैर्विचित्रैः ।
सरसीसरसीरुहैरुदारैरतिदाघस्य निवर्तनं प्रकुर्यात् ॥ ३३ ॥
लीलावलोकनविलोलविलोचनानाम्-
मुक्तालताऽऽकुलकुचस्थलमञ्जुलानाम् ।
सन्दिग्धमुग्धवचसां सुविलासिनीना-
मालिङ्गनं सकलदाहमपाकरोति ॥ ३४ ॥
सरसीकमलं गतपङ्कमलं विलसत्कमलम्प्रसरत्कमलम् ।
हृतशोकमलङ्घ्यधनं किमलं सकलं न निराश्रितुमोषभरम् ॥ ३५ ॥
यदा रसालोऽपि वरीवृतीति यदा मयूरोऽपि नरीनृतीति ।
यदा समीरोऽपि सरीसरीति तदा निदाघस्तु मरीमरीति ॥ ३६ ॥
यदि मृगाङ्कमुखी मुखहृग्वपुः सुखकरेण करेण परामृशेत् ।
श्रमनिदाघतृषां निकरस्तदा ज्वरवतो लवतः किमु संव्रजेत् ॥ ३७ ॥
उशीरशीतद्युतिशीतले यः क्षणे क्षणे तापमपाकरोति ।
सौधानि धाराधरचुम्बितानि हारीणि गीतानि निशामुखानि ॥ ३८ ॥
सरोजराजिराजिते रजोविरञ्जिताजिरे ।
गृहे सुदीर्घिका प्रिये निदाघनाशकारिणी ॥ ३९ ॥
हारेण गुणिना यस्य सङ्गतिः सम्प्रजायते ।
तस्य दाहः शमं याति नात्र कार्या विचारणा ॥ ४१ ॥
उल्लसल्लोलकह्लारे सुन्दरीजनसुन्दरे ।
आगरे रुचिराकारे स्वापो दाघमपोहति ॥ ४२ ॥
केदारः कुमुदं कान्ता केतकी काननं कथा ।
ककारषट्कं सन्दिष्टं महादाहविनाशनम् ॥ ४३ ॥

सल्लकीरुचिरमालतमालनारिकेललवलीकदलीभिः ।
चञ्चलाभिरनिलेन वलेन कस्य दाहमपहन्ति न योगः ॥ ४४ ॥
कुसुमसायकसायककोमले हरिणलाञ्छनलाञ्छनलोचने ।
कमलविष्टरविष्टरभूषिते हरति कस्य रुजं न शुकस्य वाक् ॥ ४५ ॥
शिशिरदीधितिदीधितिसंहतिः परिमलाऽऽकुलपेलवपल्लवाः ।
हृदयरञ्जनकोकिलकोकिलाकलकलश्रवणं च निदाघजित् ॥ ४६ ॥
पित्तज्वरे किं रसफाण्टलेपैः किं वा कषायैरमृतेन किंवा ? ।
पेयं प्रियायामुखमेकमेव लोलिम्बराजेन सदानुभूतम् ॥ ४७ ॥
कृष्णाकृष्णामूलचव्याग्निविश्वैरेभिः सर्वैर्जायते पञ्चकोलम् ।
वातश्लेष्मद्वेषि धत्ते हुताशं मुग्धे कान्ते तन्वि सुभ्रु प्रसन्ने ॥ ४८ ॥
बालेऽबाले बालबालेऽबलेऽस्मै हृच्छूलामश्लेष्मवातज्वरेषु ।
मुस्तातिक्ताग्रन्थिपथ्याऽरुजानां क्वाथः सम्यग्दीपनःपाचनश्च ॥ ४९ ॥
कृष्णाद्रिकृष्णामलकीहरीतकीक्वाथे प्रपीते दिवसेषु सप्तसु ।
ज्वरःस्ववृद्धिं दहनाय यच्छति ज्वराय कार्श्यं दहनश्च यच्छति ॥ ५० ॥
उग्रापटोलात्रिफलावृषामृता-तिक्ताकषाये मधुना समन्विते ।
पीते सति स्यात् ससुखःकफज्वरी नरःसकामःप्रमदाधरे यथा ॥ ५१ ॥
व्याघ्रयमृतौषधतोयदभार्ङ्गीधन्वयवाससमुत्थकषायः ।
हन्ति कणारजसा कफजार्तिं पुत्रइव प्रमदः पितृकीर्तिम् ॥ ५२ ॥
भार्ङ्गीगुडूचीघनदारुसिंही-शुण्ठीकणापुष्करकैः कषायः ।
ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधां करोति प्ररुचिं तनोति ॥ ५३ ॥
पिबति यः कुलकत्रिफलावचामधुकनिम्बयुतं मधुना तथा ।
ज्वर उपैति शमं कफपित्तजो गणकरोषकृतो विभवो यथा ॥ ५४ ॥
मम द्वयं विस्मयमातनोति रुचिं चरीकर्त्यरुचः कषायः ।
निपीडितोरोजसरोजकोशा योषा प्रमोदं प्रचुरम्प्रयाति ॥ ५५ ॥
पिप्पलिपौष्करकट्फलशृङ्गीचूर्णकृतो मधुमानवलेहः ।
श्लेष्मतमस्तपनो ज्वररक्षोदाशरथिः कसनश्वसनघ्नः ॥ ५६ ॥
पञ्चाङ्घ्रिद्वयपौष्करेन्द्रजशटीदुःस्पर्शराजीफलै-
स्तिक्ताकर्कटशृङ्गिभार्ङ्गिसहितैरेभिः कृतात् क्वाथतः ।
हिक्कापार्श्वहृदर्तिवान्तिकसनश्वासत्रिदोषा अपि
प्रौढा यान्ति पराभवं खलु यथा वेदान्तिनस्तार्किकात् ॥ ५७ ॥

अर्कग्रन्थिकशिग्रुदारुचविकानिगु ण्डिकापिप्पली-
रास्नाभृङ्गपुनर्नवानलवचाभूनिम्बशुण्ठीकृतः ।
क्वाथो हन्ति धनुःसमीरणमपस्मारं प्रसूतिं चलान्
कृच्छ्रान् कृच्छ्रतरत्रिदोषदलनः शैत्यस्य विध्वंसनः ॥ ५८ ॥
सुदति सुमुखि वाले चारुभाले सुचैले
नखलिखितकपोले कामकर्मानुकूले ।
दलयति दशमूली कृष्णया कण्ठहृद्रुक्
श्वसनकसनतन्द्रापार्श्वशूलत्रिदोषान् ॥ ५९ ॥
त्रिदोषेण तुल्यः परेताधिराजः परेताधिराजेन तुल्यस्त्रिदोषः ।
परेताधिराजस्त्रिदोषैर्विजित्रस्तयोरेव साम्यं तयोरेव मन्ये ॥ ६० ॥
यः सन्निपातसलिलाधिपतौ निमग्नान्-
जन्तून् समुद्धरति वैद्यपतिः स एव ।
तस्याश्वदान-गजदान-फलानि कां च-
पूजां न सोऽर्हति भणन्ति महान्त इत्थम् ॥ ६१ ॥
सर्वस्वैः पूजयेद् वैद्यं सन्निपाताद् विवर्जितः ।
नो चेत् स नरकं याति शम्भुरित्याह पार्वतीम् ॥ ६२ ॥
युक्त्वक्शुण्ठीकारवीकट्फलानां तुल्यांशानां चूर्णितानां विमिश्रैः ।
वारं वारं कर्णमूलोत्थ-शोथं रक्तस्रावैराज्यपानैर्जयेद्वा ॥ ६३ ॥
अग्निमन्थाग्निरास्नाभिर्मातुलुङ्गस्य मूलकैः ।
सदारुनागररैर्लेपः कर्णपार्श्वरुजो हरः ॥ ६४ ॥
अजीर्णजीर्णज्वरपाण्डुकासश्वासाग्निसादाऽरुचिजांस्तु दोषान् ।
दूरीकरोत्याशु गुडेन कृष्णा कृष्णेव कृष्णेन विमोह मंहः ॥ ६५ ॥
जीर्णज्वरं कफयुतं कणया समेतः
छिन्नोद्भवोद्भवकषायक एष हन्ति ।
रामो दशास्यमिव राम इव प्रलम्बं
रामो यथा समरमूर्धनि कार्तवीर्यम् ॥ ६६ ॥
पञ्चमूलसलिलं चपलाया धूलिभिर्विलुलितं प्रपिबन्तम् ।
पूरुषं कफचिरज्वरपीडा संजहाति विधनं गणिकेव ॥ ६७ ॥
मुस्ताऽमृतानन्तकिरातसिंहीशुण्ठीशटीपर्पटरोहिणीनाम् ।
क्वाथः कणाक्षौद्रयुतः प्रशस्तो जीर्णज्वरे वा विषमज्वरे वा ॥ ६८ ॥
वासापटोलत्रिफला-द्राक्षाशम्याकनिम्बजः ।
समधुः ससितः क्वाथो हन्यादैकाहिकं ज्वरम् ॥ ६९ ॥
सशिशिरः सघनः समहौषधः सनलदः सकणः सपयोधरः ।
समधुशर्कर एष कषायको जयति सत्वरमेव तृतीयकम् ॥ ७० ॥

चातुर्थिको गच्छति रामठस्य घृतेन जीर्णेन युतस्य न स्यात् ।
लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ७१ ॥
सुरदारुशिवाशिवास्थिरावृषविश्वैः कथितः कषायकः ।
मधुना सितया समन्वितः परिपीतः शमयेच्चतुर्थकम् ॥ ७२ ॥
भज वेपथुमन् सदा हसन्तीं गतधूमां च विलासिनीं हसन्तीम् ।
कठिनस्तनमञ्जुलोज्ज्वलाङ्गीं मधु च त्र्यूषणकेन कट्फलं वा ॥ ७३ ॥
अगस्त्यपत्रस्वरसैर्नस्याद् याति चतुर्थकः ।
संसारसागर इव पुरारिपुरसेवनात् ॥ ७४ ॥
शक्राह्वदद्रुघ्नविषामृतानां निर्गुण्डिकाभृङ्गमहौषधानाम् ।
क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेताः ॥ ७५ ॥
सनागरायाः सपयोधरायाः ससिंहिकायाः सगुडूचिकायाः ।
धात्र्याः कषायो मधुना समेतः कणासमेतो विषमज्वरे स्यात् ॥ ७६ ॥
सुरालये वा भुजगालये वा नरालये वा न रसोनकल्कात् ।
तैलेन युक्तादपरः प्रयोगो महासमीरे विषमज्वरेऽपि ॥ ७७ ॥
क्षौद्रेण पथ्या विषमज्वरापहाऽजाजीगुडाग्र्या विषमज्वरापहा ।
कृष्णैधमाना विषमज्वरापहा श्रेष्ठा गुडाग्र्या विषमज्वरापहा ॥ ७८ ॥
प्रवालतुलिताधरे कुचकुलाचलालङ्कृते
विशालजघनस्थले चटुलचारुचैलाञ्चले ।
पटोलकटुरोहिणी-मधुकचेतकीमुस्तकैः
कषायक उदाहृतो विषमशान्तये सूरिभिः ॥ ७९ ॥
यो भजेत् समधुश्यामां श्यामामिव मनोहराम् ।
विषमेषुव्यथास्तस्य न भवन्ति कदाचन ॥ ८० ॥
क्षणमपि चलतां जहीहि मुग्धे शृणु वचनं मम तन्वि सावधाना ।
वसति शिरसि मेघनादमूले व्रजतितरां विषमो विशालदृष्टे ! ॥ ८१ ॥
विषममपहरत्यसौ कषायो मधु मधुरो मधुकामृताशिवानाम् ।
अहमिव तव कामिनि प्रकोपं चरणसरोरुहयोर्लुठन् हठेन ॥ ८२ ॥
हे मुग्धे सलिलधरामृताशिवानां सप्ताहं पिब मधुसंयुतं कषायम् ।
भो कान्तो तव विषमज्वरापनोदादत्यन्तं तनुलतिका प्रहर्षिणी स्यात् ॥
अयि कुशाननतीक्ष्णमते मते मतिमतामतिमन्मथमन्थरे ।
ज्वरहरं रुगरिष्टशिवावचायवहविर्जतुसर्षपधूपनम् ॥ ८४ ॥
तिक्तोशीरबलाधान्यपर्पटाम्भोधरैः कृतः ।
क्वाथः पुनः समायातं ज्वरं शीघ्रं निवारयेत् ॥ ८५ ॥

रास्नामूर्वामधुकरजनीकुष्ठशीताश्वगन्धा-
कौन्तीतिक्तामिशिसुरघनैस्तुल्यभागैः समस्तम् ।
तैलं लाक्षारसपरिमितं गर्भिणीनां प्रशस्तं
भूतोन्मादज्वरपवनजिद् यक्षरक्षःक्षयघ्नम् ।। ८६ ॥
रुङ्मूर्वाजतुविकसासुवर्चिकानिड्विश्वाभिः सलिलसहृग्दधिप्रसिद्धे ।
तक्रे षड्गुणगणिते विपक्वमार्ये तैलं स्यात्सपदि निदाघशीतहारि ॥८७॥
गोपीद्वयामलकी स्थिरामगधजातिक्ताहिमश्रीफल-
द्राक्षाफालिनिसेव्यधावनिविषामुस्तैन्द्रजैः साधितम् ।
स्यादाज्यं विषमज्वरं क्षयशिरःपार्श्वव्यथाऽरोचकं
दीप्तं शोफहलीमकप्रशमयेल्लीलालतामञ्जरि ।। ८८ ॥
ऊष्मार्दितो यश्च दिनावसाने शीतार्दितो यश्च निशावसाने ।
हिक्कार्दितो यः कसनार्दितो यः स याति मृत्योरवलोकनाय ।। ८९ ॥
वेदानां श्रवणं हितस्य चरणं द्रव्यस्य संवर्षणं
कृष्णस्य स्मरणं शुभस्य करणं विप्रस्य सन्तर्पणम् ।
अश्वत्थभ्रमणं सुरत्नधरणं दीनस्य संरक्षणं
हन्यादष्टविधं ज्वरं कुमुदिनीनाथो यथोग्रं तमः ।। ९० ॥
सहस्रनेत्रस्य सहस्रबाहोः सहस्रवक्त्रस्य सहस्रमूर्ध्नः ।
सहस्रपादस्य सहस्रनाम्नः सहस्रनाम्नां पठनं ज्वरघ्नम् ।। ९१ ॥
गणेश्वरो वा गरुडेश्वरो वा गौरीश्वरो वा दिवसेश्वरो वा ।
माहेश्वरी वा कुलदेवता वा सम्पूजनीया ज्वरिणा प्रयत्नात् ।। ९२ ॥
गुरुभोजनपानवाहनानि प्रमदास्नानतुषारवारिकोपान् ।
न भजेज्ज्वरवर्जितस्तु तावत्प्रभवेद् वह्निबलं बलञ्च यावत् ।। ९३ ॥

---

## अथ द्वितीयो विलासः

कुटजातिविषाकिरातति‍क्तैरमृताविश्वघनैः कषायकः ।
सकलज्वरनाशकारकः सकलातीसृतिनाशकारकः ।। १ ॥
शीतोशीरकलिङ्गवालकवृकीपद्माकधान्यामृता-
भूनिम्बाम्बुदबालबिल्वकवृषामुस्तेन्द्रजैः साधितः ।
क्वाथो माक्षिकसाक्षिको विजयते सर्वातिसाराञ्ज्वरान्
हृल्लासारुचिसर्वदाथवमिभिः सम्मिश्रितान् भो प्रिये ! ।। २ ।।
पञ्चाङ्घ्रिवृक्ष्यब्दबलेन्द्रबीजत्वक्सेव्यतिक्तामृतविश्वबिल्वैः ।
क्वाथः सशूलान् सवमीन् सकासाञ्ज्वरातिसारान्नचिरान्निहन्ति ॥

कफाधिके वा पवनाधिके वा द्वयाधिके वा गुरुपञ्चमूलम् ।
पित्ताधिके स्याल्लघुपञ्चमूलं पुनः पुनः पृच्छसि किं मृगाक्षि ।। ४ ।।
सदेवदारुः सविषः सपाठः सजन्तुशत्रुः सघनः सतीक्ष्णः ।
सवत्सकः क्वाथ उदाहृतोऽसौ शोफातिसारद्विपराजसिंहः ।। ५ ।।

प्रौढे यौवनगर्विते प्रियतमे धान्येन किं किं श्रिया
किं विश्वेन पयोधरेण तव किं किं बालकेनापि मे ।
ज्ञात्वा मोहमयीं प्रपञ्चरचनां गोपीपतिं ध्यायतो-
ऽतीसारोऽग्निशमामशूलनिकरो धान्यादिभिः क्षीयते ।। ६ ।।

धान्याम्ब्ववद् श्रियां पित्तजातिसारो निवार्यते ।
केनाऽत्र ज्ञायते कर्ता त्वां विना विमलानने ।। ७ ।।
मोचरसौषधवत्सकरोध्रैर्बिल्वपयोदमदाकुसुमैश्च ।
चूर्णमिदं गुडतक्रनिपीतं हन्त्यचिरादतिसारमुदारम् ।। ८ ।।
कल्याणि कल्पलतिके ललिताङ्गयष्टे !
हस्ते विलोलकमले ! ललने ! शृणु त्वम् ।
शुण्ठीमदाकुसुममोचरसाजमोदा-
स्तक्रान्विताः प्रशमयन्त्यतिसारसारम् ।। ९ ।।
भो वैद्यनाथा ! यदहं ब्रवीमि तद् यस्य कस्यापि पुरो न वाच्यम् ।
भूधात्रिकाया रज एकमेव दध्नान्वितं हन्त्यतिसारजालम् ।। १० ।।
अतिसारप्रशमनी परमानन्ददायिनी ।
वृद्धिदा तनुवल्लेश्च श्यामा श्यामेव शोभते ।। ११ ।।
पुटपाकविपाचितारलुत्वगसद्दीप्तहुताशदीपनी ।
मधुमोचरसप्रयोजिता सहसाऽतिस्रुतिनाशकारिणी ।। १२ ।।
आम्रास्थिलोध्रवृकियष्टिकलिङ्गबीज-
कट्वङ्गमुस्तकमदातिविषाम्बुविश्वैः ।
जम्बूफलामलकबिल्वयुतैश्च चूर्णं
जीर्णाखिलातिसृतिहारि सतण्डुलाम्बु ।। १३ ।।

बाले कोमलकुन्तलेऽमलकुले केलीकलालालसे
मालामालिनि कोकिलावलिकलालापे विलासाचले ।
चञ्चत्कुण्डलमण्डले विजयते रक्तामशूलान्वित
सोशीर कुटजाब्दबिल्वकविषोदीच्यैः कषायः कृतः ।। १४ ।।
चन्दनं विमलतण्डुलाम्बुना संयुतं मधुयुतं सितायुतम् ।
तृड्विखण्डनमसृग्विखण्डनं खण्डनं प्रचुरदाहमेहयोः ।। १५ ।।

जयति जीवनदायकजीवनं समधु शीतलमुत्पललोचने ।
अतिसृतीर्गुणगौरवगर्विते परवधूगमनं शुचितां यथा ॥ १६ ॥
अये घनवनस्यास्य मधुयुक्तस्य सेवनं ।
सातिसारी नरो योऽस्ति सोधिकारी भवेत् सुखी ॥ १७ ॥
त्वचो रसालार्जुनसल्लकीनां प्रियालजम्बूबदरीद्रुमाणाम् ।
पृथक्पृथङ्माक्षिकदुग्धयुक्ता रक्तापहाः स्युर्द्विजराजकन्ये ॥ १८ ॥
आमशूलविबन्धास्रस्रुतिकुक्षिगदापहम् ।
सेवितं सगुडं बिल्वं बिल्वतुल्यपयोधरे ॥ १६ ॥
सखि दाडिमवत्सकत्वचा-जनितक्षौद्रयुतः कषायकः ।
शमयेदचिरादतीसृतिं रुधिरोत्थां सुतरां दुरत्ययाम् ॥ २० ॥
रक्तातिसारं शमयेत् कल्को वर्याः पयोऽन्वितः ।
पयःपानं विधातुर्नुस्तया वा साधितं घृतम् ॥ २१ ॥
धातकी बिश्वमूलश्च वत्सकत्वक्समन्वितम् ।
रक्तातीसारशमनं क्वाथं मधुयुतं प्रिये ॥ २२ ॥
समदाकुसुमं सबिल्वलोध्रं सजलं नागकणाकृतः कषायः ।
मधुना परियोजितो निहन्यादतिसारं सकलं स्तनन्धयानाम् ॥ २३ ॥
कृष्णारुणामुस्तकशृङ्गिकाणां चूर्णेन पूर्णेन च माक्षिकेण ।
ज्वरातिसारः प्रशमं प्रयाति सश्वासकासः सवमिः शिशूनाम् ॥ २४ ॥
तृट्श्वासकासज्वरशोफमूर्च्छाहिक्कामुखारोचकवान्तिशूलैः ।
खिन्नोऽतिसारी स्मरतु प्रयत्नात् गोविन्द दामोदर माधवेति ॥ २५ ॥
यवानीनागरोशीरधनिकातिविषाघनैः ।
बालबिल्वद्विपर्णीभिर्दीपनं पाचनं भवेत् ॥ २६ ॥
अमृतातिविषौषधाम्बुवाहैः सदृशैः पाचनदीपनः कषायः ।
परिसेवित आमवर्षिणीनां ग्रहणीनां शमनो मनोहराऽऽस्ये ॥ २७ ॥
पुनर्नवाबल्लिजवाणपुङ्खाविश्वाग्निपथ्याचिरबिल्वबिल्वैः ।
कृतः कषायः शमयेदशेषान् दुर्नामगुल्मग्रहणीविकारान् ॥ २८ ॥
पाठाविषानलदवत्सकवत्सकत्वक्तिक्तामदारसजनागरबिल्वचूर्णम् ।
सक्षौद्रतण्डुलजलं ग्रहणीप्रवाहीरक्तप्रवाहगुदरुग्गुदजेषु देयात् ॥ २६ ॥
तिक्तातिक्तघनेन्द्रजं त्रिकटुकं पीत्वा समग्रं समं
द्वौ भागौ शिखिनः कलापरिमितात् भागान् कलिङ्गत्वचः ।
चूर्णं स्याद् गुडशीततोयसहितं सेव्यं ग्रहण्यां ज्वरे
गुल्मारोचककामलातिसृतिजित् पाण्डूड्डुसूर्योदयः ॥ ३० ॥

द्विक्षारषट्कटुपटुव्रजहिङ्गुदीप्यैरेभिर्गुडो वदरदाडिमलुङ्गनीरैः ।
श्लेष्मानिलग्रहणिकासु च योजनीयो लोकत्रयैकमतिदीपनपाचनेऽलम् ॥
क्षारयुगत्रिकटुत्रिपटूनि मिशिचविकारजनीजरणानि ।
रामठदीप्यहुताशयुतानि प्रेयसि मर्दय लुङ्गजलेन ॥ ३२ ॥
तक्रयुतं बदराम्बुयुतं वा कोष्णजलेन युतं तुषकैर्वा ।
गुल्मगुदाङ्कुरजिद् ग्रहणीषु श्रेष्ठमिदं क्षुधमाशु करोति ॥ ३३ ॥
चव्यकं चित्रकं विश्वं बालविल्वं सुचूर्णितम् ।
तक्रेण सहितं हन्ति ग्रहणीं दुःखकारिणीम् ॥ ३४ ॥
रुचकाग्निमरीचानां चूर्णं तक्रेण शस्यते ।
ग्रहण्युदरगुल्मार्शोमन्दाग्निप्लीहनाशनम् ॥ ३५ ॥
कृच्छ्रेण कठिनत्वेन यः पुरीषं विमुञ्चति ।
सघृतं लवणं तस्य पाययेत् क्लेशशान्तये ॥ ३६ ॥
वातानुलोमनं सर्पिः शुण्ठीकल्केन साधितम् ।
कासश्वासज्वरप्लीहाग्रहणीपाण्डुगञ्जनम् ॥ ३७ ॥
आजं पयो मोचरसाम्बुवाह-ह्रीवेरविल्वेन्द्रजकल्कसिद्धम् ।
दिनत्रयाद्धन्ति निपीतमुग्रामामानुबन्धां ग्रहणीं सरक्ताम् ॥ ३८ ॥

---

## अथ तृतीयो विलासः

कोमले निर्मले मञ्जुले प्रोज्ज्वले वत्सले चञ्चले वल्लभे श्रूयताम् ।
यत्त्वया पृच्छ्यते तन्मया कथ्यते त्वन्तु मां प्रेक्षसेऽद्यापि किं वक्रदृक् ॥
विजयानागरमुस्तागुडकृतगुटिका धृता वक्त्रे ।
शमयति कासं श्वासं हिममिव वक्षोधृता वनिता ॥ २ ॥
रास्नाबलापद्मकदेवदारुफलत्रिकं त्र्यूषणविडङ्गचूर्णम् ।
चिन्तामणिः क्षौद्रघृतोपपन्नः श्वासांश्च कासांश्च निराकरोति ॥ ३ ॥
वासाहरिद्राधनिकागुडूची भार्ङ्गी यथा नागररिंगणीनाम् ।
क्वाथेन तीक्ष्णेन समन्वितेन श्वासः शमं याति न कस्य पुंसः ॥ ४ ॥
समलवङ्गमरीचविभीतकैः खदिरसारसमैरवलोडितैः ।
क्वथितबब्बुलिकासलिलैर्वटी मुखधृता कसनं श्वसनं जयेत् ॥ ५ ॥
पुलोमजावल्लभसूनुपत्नीतातात्मभूशेखरकेतनस्य ।
सौन्दर्यदूरीकृतरामरामे कषायकः कासससमीरसर्पः ॥ ६ ॥
पिप्पलीपिप्पलीमूलबिभीतकमहौषधैः ।
मधुना सेवितैः कासः प्रशाम्यति कुतूहलात् ॥ ७ ॥

फलत्रयच्छिन्नरुहाहुताशरास्नाक्रिमिध्वंसिकटुत्रयाणाम् ।
चूर्णं समांशं सितया समेतं कासं जयेन्नात्र विचारणीयम् ॥ ८ ॥
संयुतं गुडसर्पिभ्यां चूर्णं त्रिकटुसम्भवम् ।
निहन्ति तरसा कासांस्त्रासानिव सतां हरिः ॥ ९ ॥
मनोहरे मानिनि मञ्जुघोषे शरीरशोभाजितमञ्जुघोषे ।
ज्वरं वमिं कासमपि च्छिनत्ति क्षौद्रेण युक्ताऽतिविषा शिशूनाम् ॥
शृङ्गवेररसचन्द्रशेखरे माक्षिकालिनिकरेण सुन्दरे ।
श्वासकासयुगमंहसञ्चयं सेविते सति सति प्रणश्यति ॥ ११ ॥
रे श्वासिनः कासिन औषधानि बहूनि कष्टात् किमिति क्रियन्ते ।
एकं मरीचालिरजो विहाय सितामधुभ्यां मधुराधरोष्ठि ! ॥ १२ ॥
रक्तपित्तकसनक्षयापहं रे द्विजोत्तम भजोत्तमं वृषम् ।
एष धर्म उचितः सुरद्विषां भेषजेऽपि वृषशब्द इष्यते ॥ १३ ॥
कटुतैलेन संयुक्तो गुडो यावन्न सेवितः ।
सप्तरात्रं कथं तावत् श्वासिश्वासो विनश्यति ॥ १४ ॥
कल्केन रास्नात्रिकटुत्रिकण्टवलादिमुख्येन च कण्टकार्याः ।
रसे विपक्वेन घृतेन सद्यः कासाः समस्ताः प्रलयं प्रयान्ति ॥ १५ ॥
दशाननस्य तनयो वदने संस्थितो जयेत् ।
श्वसनं कसनं वापि तमिवानिलनन्दनः ॥ १६ ॥
अयि प्राणप्रिये जातीफललोहितलोचने ।
शुण्ठीभार्ङ्गीकृतः क्वाथः कसनश्वसनाहिराट् ॥ १७ ॥
ज्वरवमीकसनानि विनाशयेदतिविषा मधुना सहिता शिशोः ।
सुमुखि सुभ्रु सुवर्णविराजिते सुतनु सुन्दरि देव्यपराजिते ॥ १८ ॥
नश्यन्ति शूलाः कटिकुक्षिवस्तौ रुबूकतैलाद् दशमूलमिश्रात् ।
यथा नराणां धनिनां धनानि समागमाद् वारविलासिनीनाम् ॥ १९ ॥
रास्नामृतानागरदेवदारुपञ्चाङ्घ्रियुग्मेन्द्रयवैः कषायः ।
रुबूकतैलेन निषेव्यमाणो भेत्ता भवेदामसमीरणस्य ॥ २० ॥
विलासिनीविलासेन विलासिहृदयं यथा ।
तथा गुडूचीविश्वेन हरेदामसमीरणम् ॥ २१ ॥
शोभाभिः परिभूतभूध्रतनये त्रैलोक्यगीतान्वये
कान्तेऽरण्यकुलत्थिकाश्छगणजे नीरे निधायाम्बरे ।
सुस्विन्ना वितुषीकृताः कररुहैर्वामभ्रुवां चूर्णिताः
पिष्ट्वा सैन्धवबोलचूर्णसहिताः सर्वाक्षिरोगापहाः ॥ २२ ॥

जयति मारुतपित्तकफैः कृतां वहुविधामपि लोचनयोर्व्यथाम् ।
दृढतरं मधुना वहुलीकृतो वहलपल्लवपल्लवजो रसः ॥ २३ ॥
कुवलयनयनेऽर्जुनं कफोत्थः सह सितयाशु निराचरीकरीति ।
प्रियकरमिव कामिनी नवोढा निहितमुरोजयुगे लघुप्रमाणे ॥ २४ ॥
इति निगदितमार्ये नेत्रसारं विधत्ते
घृतमधुसमवेता सेविताऽग्र्या निशायाम् ।
शशिमुखि रतिलीलालोलदृष्टे त्वमग्र्या
कथमहह विधत्से वैपरीत्यं परन्तु ॥ २५ ॥
निराकरोति नक्तान्ध्यं तथा गोशकृता कणा ।
यथा रतेन रमणी रमणस्य महावलम् ॥ २६ ॥
श्वेतापराजितामूलं घर्षितं शीतवारिणा ।
अञ्जनान्नेत्रकुसुमं कुसुमस्य निकृन्तनम् ॥ २७ ॥
नारिकेलफलस्थूलस्तनमोहितमानसे ।
हरिणाक्षि हरेच्छुक्रं माक्षिकं माक्षिकान्वितम् ॥ २८ ॥
सवासावयस्थे सभूनिम्वनिम्वे सतिक्तोत्तमे क्षौद्रयुक्ते कषाये ।
निपीते ध्रुवं क्षीयते पाण्डुरोगान्विता कामलाकोमलाऽङ्कोमलापि ॥२९॥
पटोलपाठाकटुरोहिणीनां छिन्नोद्भवाशीतमधुस्रवाणाम् ।
क्वाथो विषच्छर्दिवलासपित्तकुष्ठज्वरारोचककामलासु ॥ ३० ॥
उडुनाथवला पिचुमन्दवला त्रिफला कटुका क्वथितं सलिलम् ।
घृतमाक्षिकमत् किल कामलया सहितस्य हिताय वुधैः कथितम् ॥ ३१ ॥
त्रिफलया मधुना रजसाऽयसः कटुकया पिचुमन्दसमेतया ।
प्रलयमेति मनस्विनि कामला सघृतयाऽमृतया कुसुमाम्बुना ॥ ३२ ॥
हिङ्गुना पूर्णनेत्राणां द्रोणपुष्पीरसेन वा ।
कामला मूलतो याति देहिनां पथ्यकारिणाम् ॥ ३३ ॥
कामलामलमूलस्योन्मूलनं किल कल्पयेत् ।
गौरीगैरिकगौरीभिरञ्जनं जनरञ्जनम् ॥ ३४ ॥
छिन्नारसो वा त्रिफलारसो वा दार्वीरसो वा पिचुमन्दकं वा ।
प्रातः प्रपीतो मधुना समेतः सकामलानां सुधया समानः ॥ ३५ ॥
पिचुमन्दसमीरशत्रुबीजैः पिचुमन्दस्य रसेन साध्यमाना ।
गुटिका भगगर्भवर्तमाना भगशूलस्य महावलस्य हन्त्री ॥३६॥
छागीघृतेनोत्तरवारुणीनां मूलानि पिष्ट्वा गुटिका निबद्धा ।
तन्व्याः सुदृष्टे सुभगे भगस्था भगायुधाऽऽख्यं गदमाशुहन्ति ॥ ३७ ॥

पिष्टानि यष्टीमधुबीजपूरबीजानि मध्वाज्ययुतानि पीत्वा ।
सूते शरच्चन्द्रमुखी सुखेन मूर्खस्य वैद्यस्य विकल्पनाऽत्र ॥ ३८ ॥
अपूर्वमेकं विहितं त्वया नो कल्याणशीलेऽचपले चलाक्षि ।
बोभूयते मूर्धनि वज्रिदुग्धे न्यस्ते वधूनां सुखतः प्रसूतिः ॥ ३९ ॥
कृतप्रशंसे प्रथमप्रसङ्गे विलासिनीनां कठिनस्तनीनाम् ।
कुर्याद् विदारीजपयः पयोभिः पयोभिवृद्धिं कुटिलालकानाम् ॥ ४० ॥
भजन्ति या निर्मलतण्डुलानां रजांसि दुग्धेन सह स्थितानि ।
क्षीरौदनेनैव सहस्थितानां तासां वधूनां सखि दुग्धमृद्धम् ॥ ४१ ॥
इन्द्रवारुणिकामूलं योनिमण्डलमध्यगम् ।
प्रतीप्रदर्शिनीपुष्परोधध्वंसनसाधनम् ॥ ४२ ॥
यदि भवदनुजायाः पुष्परोधोऽस्ति मुग्धे
क्षिप मृदुलमुपस्थे स्थूलमूलं गवाक्ष्याः ।
वदति वचनमित्थं लाललोलिम्मराजे
हर हर हरिणाक्षी ह्रीसमुद्रे निमग्ना ॥ ४३ ॥
दुष्टं भवेद्यदि पयः पुरतो भवत्या—
स्तर्हि प्रियस्तनि भजस्व सुखं कषायम् ।
गोप्यौषधामृतवृकीकटुकाब्दमूर्वा-
भूनिम्बदारुसुरराजयवप्रयोगम् ॥ ४४ ॥
श्रीखण्डपर्पटघनामृतधान्यसेव्य-
ह्रीवेरयासकवलातिविषारलूनाम् ।
क्वाथो हितो भवति गर्भिणि सूतिकासु
सद्यो रुगामरुधिरातिसृतिज्वरघ्नः ॥ ४५ ॥
रसाञ्जनाम्भोधरदारुपीताभूनिम्बभल्लाततिलैः कषायः ।
क्षौद्रान्वितश्चञ्चललोचनानां नानाविधानि प्रदराणि हन्ति ॥ ४६ ॥
भुवनत्रितयेऽपि निस्तुले कुशमूलं प्रदरं विनाशयेत् ।
कलिकल्मषनाशनोचितं विमलं शालिजलेन सेवितम् ॥ ४७ ॥
उरुबुकक्कुशकाशगोक्षुराणां कनकलते ललिताकृते स्त्रि मूलैः ।
शृतमिदमपहन्ति दुग्धमिन्दुद्युतिमुखि गर्भवतीजनस्य शूलम् ॥ ४८ ॥
सुन्दरि कामिनि मञ्जुलमूर्त्ते यौवनशालिनि निर्मलवृत्ते ।
शाम्यति सत्वरमेव विशालामूलविलेपनतस्तनपीडा ॥ ४९ ॥
अशुभेषु गदेषु भीरुमुख्ये सखि ! सर्वेश्वर एव सेवनीयः ।
सगुणो निरपत्यताकुठारः पवमानो द्विषदन्तकार्तिहारी ॥ ५० ॥

## अथ चतुर्थो विलासः

माणिक्यावलिविलसत्पदारविन्दे, सानन्दे बहुलरुजां श्रुताश्चिकित्साः ।
अल्पानां किमिति कृशे शृणोषि न त्वं, विक्रीते करिणि किमङ्कुशे विवादः ॥

अयि सुन्दरि सुन्दरानने रुचिरापाङ्गतरङ्गलोचने ।
नवनीतमधूपलाशनादुडुराजोऽपि भवेत्क्षयक्षयः ॥ २ ॥

सुतनो ! सुतनोस्त्वमौषधं सकलं वेत्सि परन्तु वच्म्यहम् ।
त्रिफलाजनितः कषायकः सहितो गुग्गुलुना व्रणं जयेत् ॥ ३ ॥

मदनज्वरकारिनामधेये शृणु सद्वेणि सुवाणि वर्णिनि त्वम् ।
प्रपिबन् समधूदकं प्रभाते गणनाथोऽपि भवेत् किलास्थिशेषः ॥ ४ ॥

सदये सदये सरोजराजीरजसोरोजगिरौ विराजमाने ।
सुभगे सुभगे कृशस्य पुंसस्तिलकोङ्गुष्ठकृतोऽतिपुष्टिहेतुः ॥ ५ ॥

कान्ते मृणालवलये ललिते सुलास्ये-
त्रैलोक्यशालिनि रसालरसालचित्ते ।
शोफं किरातकमहौषधयोः कषायो-
दूरीकरोति रघुनाथ इवारिवीरम् ॥ ६ ॥

शृणु पद्मिनि ! पद्मिनीद्युते भुवि पद्मोपमिते सपद्मके ।
सगुड दधि सेवितं तृषं पवमानप्रभवां नियच्छति ॥ ७ ॥

कामकेलिचतुरे मनोहरे पीवरोरु मधुराधराधरे ।
मेघनादरजनीरसो बुधैरीरितो विषविनाशकारकः ॥ ८ ॥

रतिकेलिकलाकुशले ललने विमले मलयाचलतुल्यकुचे ।
अमृतव्रतती रुबुतैलयुता शमयेदनिलास्रमुदारतरम् ॥ ९ ॥

लशुनजीरकगन्धकसैन्धवत्रिकटुरामठचूर्णमिदं समम् ।
जयति निम्बुरसेन विसूचिकां हृदयहारिविहारिणि वत्सले ॥ १० ॥

त्रिकटुत्रिफलात्रिवृत्कलिङ्गैः खदिरोग्रापिचुमन्दजः कषायः ।
पशुमूत्रसमन्वितो निपीतः क्रिमिकोटीरपि हन्ति हन्ति वेगात् ॥ ११ ॥

अमृतासुमनःप्रवालदार्वीत्रिफलादीप्यकगोस्तनीकषायः ।
कवलग्रहणान्मुखस्य पाकं मधुमिश्रः शमयेदशेषमाशु ॥ १२ ॥

अमृतास्वरसो निषेवितः सन् सकलं मेहमपाचरीकरीति ।
विपरीतरते रते नितान्तं यमिनां धैर्यमिवाङ्गनाकटाक्षः ॥ १३ ॥

ये सन्ति केचिद् हृदयस्य रोगाः सर्वेऽपि ते यान्ति शमं त्रिरात्रात् ।
चेत् पार्थकल्कं स्वरसं प्रसिद्धं सर्पिर्निषेवेत नरः सपथ्यः ॥ १४ ॥

रसद्विजीरद्विनिशामरीचसिन्दूरलेलीतमनःशिलानाम् ।
घृतेन युक्तैरपयाति पामा विपद्यथा शङ्करमन्त्रपाठैः ॥ १५ ॥

रमारम्याकारे चतुरवचने चारुलपने
तडिद्वल्लीतुल्ये करतललसन्नीलनलिने ।
निदाघः सञ्जातः किमु तव सरोजन्मकदली-
दलैः क्लृप्ते तल्पे स्वपिहि यदि सौरभ्यभरिते ॥ १६ ॥

पथ्यातिलारुष्करकैः समांशैर्गुडेन युक्तैः खलु मोदकः स्यात् ।
दुर्नामपाण्डुज्वरकुष्ठकासश्वासान् जयेत् प्लीहयुतस्य पथ्यः ॥ १७ ॥

भल्लातकासीसहुताशदन्तीमूलैर्गुडस्नुग्रविदुग्धदिग्धैः ।
प्रलेपितैर्गच्छति गण्डमाला समीरपूरैरिव मेघमाला ॥ १८ ॥

भूनिम्बनिम्बत्रिफलाकलिङ्गवासामृतापर्पटभृङ्गराजैः ।
क्वाथः समेतो मधुना निपीतो विनाशयेदुल्वणमम्लपित्तम् ॥ १९ ॥

चूर्णाः कषाया गुटिका घृतानि तैलानि भागेन नियोजितानि ।
विलासिनां वातविनाशनाय विलासिनीनां परिरम्भणानि ॥ २० ॥

अमृततममृतजं निराकरोति द्रुतमुपलाकलितं करालपित्तम् ।
तरुण इव नितम्बिनीनितम्बाम्बरमतनुज्वरजर्जरीकृताङ्गः ॥ २१ ॥

मनस्विनी सुभ्रु सुचञ्चलाक्षि घनस्तनश्रोणितटाभिरामे ।
कफप्रकोपस्य शमाय योग्यो योगो यथाऽयं न तथान्ययोगः ॥ २२ ॥

कफाद् भवति भो भीरु ! च्छिन्नाक्वाथो मधूदरः ।
अस्यार्थो लभ्यते नैव तन्वङ्गि तव मध्यवत् ॥ २३ ॥

पुनर्नवानागरदारुपथ्या-भल्लातकच्छिन्नरुहाकषायः ।
दशाङ्घ्रिमिश्रः परिपेय ऊरुस्तम्भेऽथवा मूत्रपुरप्रयोगः ॥ २४ ॥

इभचन्दनलाजकोलमज्जा-ललनैलाब्दलवङ्गपिप्पलीनाम् ।
रजसा समधूपलेन वान्तिः कफपित्तानिलजापि शान्तिमेति ॥ २५ ॥

अयश्चूर्णतुल्यं वराव्योषवेल्लाग्निमुस्तारजः क्षौद्रतक्राम्बुकाज्यैः ।
प्रयुक्तं जयेत् कामलाकुष्ठहृद्दद्रुकूप्रमेहार्शसां नाशनम्पाण्डुरोगम् ॥ २६ ॥

अयि निधुवनशीले चञ्चले चञ्चलाभे-
बकुलमुकुलमालाशालिकण्ठप्रदेशे ।
रुचिरचरणयुग्माम्भोजगुञ्जद्द्विरेफे
बहलदलकषायः क्षौद्रयुक्तोऽश्मरीघ्नः ॥ २७ ॥

शिशिरकिरणजिन्मुखारविन्दे पृथुलकलापिकलापकेशपाशे ।
शमयति परिणामकं सखण्डं समधुरजःकणलोहचेतकीनाम् ॥ २८ ॥

शिग्रुरुबुवरुणैः सपिप्पलैर्यामिनीद्वययुतैः कषायकः ।
बोलचूर्णसहितोऽन्तरुत्थितं विद्रधिं प्रशमयेदसंशयम् ॥ २९ ॥
मलयानिलकल्लोल-लसत्परिमलानने ।
दुरालभाकषायेण सघृतेन भ्रमो व्रजेत् ॥ ३० ॥
द्राक्षा पथ्या वृषः कण्टगिरिकर्णसमन्वितः ।
रसालास्थिशिवाचूर्णं पूर्णं नीरेण सत्वरम् ॥ ३१ ॥
श्लक्ष्णपिष्टैर्यथाशीघ्रमेभी रत्नकलोदितैः ।
प्रलेपैः सप्तभिर्मूर्ध्नो दारुणं दारुणं जयेत् ॥ ३२ ॥
राजवृक्षत्वचः क्वाथः सोमराजिरजोऽन्वितः ।
गुडेन सहितः सेव्यः शिवत्रक्षत्रभृगूद्वहः ॥ ३३ ॥
किमुपैति बुधो देवो देवदत्तद्विषं किमु ।
लेपः श्वास्थ्नां खराम्भोभिः किं न हन्ति भगन्दरम् ॥ ३४ ॥
कणानागरधात्रीणां रजसा समधूपलम् ।
नस्येन विश्वगुडयोर्हिक्का नश्यति तत्क्षणात् ॥ ३५ ॥
सैन्धवार्द्रभुजो रोगं भस्मीकुर्यान्ति संशयः ।
अत्र कर्तृपदं ज्ञातुं दत्तं कल्पचतुष्टयम् ॥ ३६ ॥
द्विषतां मम सन्नितम्बविम्बे मधु हृच्छोकमपाकरोतु सद्यः ।
सुहृदां तव सद्विलासलास्ये मधु हृच्छोकमपाकरोतु सद्यः ॥ ३७ ॥
देशे देशे दृश्यते सिन्धुतीरं तीरे तीरे वञ्जुलानां निकुञ्जः ।
कुञ्जे कुञ्जे सुभ्रुवां सीधुपानं पाने पाने वर्तते सर्वलोकः ॥ ३८ ॥
किमु पिवति समूहः शोकभाजां जनानां
निपतति युवतीनां कामिनां कः स्तनेषु ।
व्यथयति सुरते कः कैरवाक्षीं नवोढां
स्मर सुहृदि वसन्ते जायते कः समृद्धः ॥ ३९ ॥
कीलालं विश्वजं यः प्रपिवति पुरुषस्तस्य वक्त्रे रुचिः स्या-
न्नैर्मल्यं चित्तदृष्ट्योर्जठरजठररुक्पीनसश्वासकासाः ।
नश्यन्ति क्षुत्प्रबोधो द्युतिरपि वपुषो जायते मञ्जुघोषो
भूलोके मञ्जुघोषे सुदति मम परं विस्मयो वर्ततेऽत्र ॥ ४० ॥
धन्योऽसि रे वकुल सन्मलयाख्यशैल-
मन्दानिलेन चपलीकृतबालपत्र ।
त्वद्वल्कलस्य रजसः परिघर्षणेन
दन्ता भवन्ति चपला अपि वज्रतुल्याः ॥ ४१ ॥

केलीशैले बकुलपटलं वर्तते यत्त्वदीये
चन्द्रास्ये तत्सकलभयतो यत्नतः पालनीयम् ।
कस्मात् स्वामिन् भवति सुतरां त्वत्कृपा नेतरेषां
तस्य त्वग्भिर्दशनदृढता दृश्यते तन्वि यस्मात् ॥ ४२ ॥
कान्ते कामिनि भामिनि प्रियतमे तन्वङ्गि चन्द्रानने
सुभ्रु प्रेयसि मानिनि स्मररणक्षोणि क्षणं श्रूयताम् ।
रुग्लोध्राम्बुदतेजविड्द्विरजनीतिक्तासङ्गावृकी
तेषां चूर्णविघर्षणादपहरेत् कण्डूं रुगस्रस्रुतिम् ॥ ४३ ॥

---

## अथ पञ्चमो विलासः

शयनं यदि पल्लवपुष्पकृतं गहनं यदि मत्तपिकं सरुतम् ।
यदि चारुवपुर्यदि भूरिधनं किमतः परमस्ति सुखं द्युसदः ॥ १ ॥
अमन्दामोदमन्दारे प्रमोदोदयदायिनि ।
मरुदान्दोलितोदारचञ्चच्चम्पकचारुणि ॥ २ ॥
भ्रमद्भ्रमरमालाभिर्मालतीभिरलङ्कृते ।
स्फुरद्वने सुखावासः कामिनां कामदो भवेत् ॥ युग्मकम् ॥ ३ ॥
रहसि गलितलज्जा बाह्यदेशे सलज्जा
कुचभरनमिताङ्गी चन्दनक्षालिताङ्गी ।
मृदुतरमुपयान्ती श्रोणिवक्षोजभाराद्
द्रढयति कमलाक्षी कस्य कामं न कामम् ॥ ४ ॥
सुन्दरि विदारिकायाः सम्यक् स्वरसेन भावितं चूर्णम् ।
सर्पिःक्षौद्रसमेतं लीढ्वा रसिको दशाङ्गना रमयेत् ॥ ५ ॥
चूर्णमामलकजं मृगनेत्रे भावितं स्वजनितेन रसेन ।
शर्करामधुपयोघृतयुक्तं यः पिबेत् प्रतिदिनं रतलुब्धः ॥ ६ ॥
रूपयौवनभरालसगात्रश्चित्तचौर्यचतुराः सतु योषाः ।
कामयेत् प्रतिदिनं शतसङ्ख्या वार्द्धकं प्रति गतोऽपि युवेव ॥ ७ ॥
विदारिकाकन्दभवं सुचूर्णं पयोघृताभ्यां सहितं मृगाक्षि ।
कर्षप्रमाणं समदन् प्रभाते वृद्धोऽपि बालाशतमत्र भुङ्क्ते ॥ ८ ॥
य आत्मगुप्तेक्षुरबीजचूर्णं सशर्करं केतकगर्भगौरि ।
धारोष्णदुग्धेन पिबेत् प्रभाते नारीसहस्रं रसिकः स भुङ्क्ते ॥ ९ ॥
कर्षप्रमाणं मधुकस्य चूर्णं सद्यो घृतक्षौद्रसमन्वितञ्च ।
पयोऽनुपानं रुचिराङ्गि लिह्यात् स नित्यवेगो वनितासहस्रे ॥ १० ॥

उच्चटाप्रभवं चूर्णमुन्निद्रकमलानने ।
क्षीरेण सहितं लीढ्वा नरो वाजीव जायते ॥ ११ ॥
शतावर्युच्चटाचूर्णं कमलायतलोचने ।
सुखार्थिना सदा सेव्यं शुक्रदार्ढ्यकरं परम् ॥ १२ ॥
सर्पिषा पयसा वाऽथ अश्वगन्धापलार्धकम् ।
प्रभाते सेवनं कुर्यात् कृशानां पुष्टिकारणम् ॥ १३ ॥
तूलिनीपुष्पचूर्णन्तु क्षौद्रकर्षं लिहेदनु ।
दुर्वलो वलमाप्नोति मासैकेन यथा शशी ॥ १४ ॥
अश्वमारजटालेपं यः करोति करे मणौ ।
वीर्यस्तम्भं स लभते कर्णाटीसुरतेष्वपि ॥ १५ ॥
क्वाथं पिवेत् खाखसवल्कलानां सर्पिर्यवानीगुडमिश्रितं यः ।
प्राप्नोति भूयः सुरतेषु दार्ढ्यं भवेद् रिरंसुः कलविङ्कवत् सः ॥ १६ ॥
सकर्पूरो रसक्षौद्रजातीरजविमिश्रितः ।
लिङ्गलेपात् करोत्येष द्रावणं हरिणीदृशाम् ॥ १७ ॥
वक्षोजन्मभरालसाः सुजघनाः सम्पूर्णचन्द्राननाः
श्यामाश्चञ्चललोचनाः सुवसना गम्भीरनाभिह्लदाः ।
क्षामा वन्धुरकन्धराः सुदशनाः विम्वाधराः सुस्वरा
भव्यानां भवने वसन्ति वनिता विश्वेश्वरानुग्रहात् ॥ १८ ॥

---

# वैद्यजीवनम्

प्रकृतिसुभगगात्रं प्रीतिपात्रं रमाया
दिशतु किमपि धाम श्यामलं मङ्गलं वः ।
अरुणकमललीलां यस्य पादौ दधाते
प्रणतहरजटालीगाङ्गरिङ्गत्तरङ्गे ॥ १ ॥

रत्नं वामदृशां दृशां सुखकरं श्रीसप्तशृङ्गास्पदं
स्पष्टाष्टादशबाहु तद्भगवतो भर्गस्य भाग्यं भजे ।
यद्भक्तेन मया घटस्तनि घटीमध्ये समुत्पाद्यते
पद्यानां शतमङ्गनाधरसुधास्पर्द्धाभिधानोद्धुरम् ॥ २ ॥

दिवाकरप्रसादेन रोगारोग्यसमीहया ।
समासेन वयं कुर्मः काव्यं सद्वैद्यजीवनम् ॥ ३ ॥

तथापि क्रियते ग्रन्थः सन्ति यद्यपि दुर्जनाः ।
नहि दस्युभयाल्लोको दैन्यवानिह वर्तते ॥ ४ ॥

गदगञ्जनाय चतुरैश्चरकाद्यैर्मुनिभिर्नृणां करुणया कथितं यत् ।
अखिलं लिखामि खलु तस्य रहस्यं स्वकपोलकल्पितमिहास्ति न किञ्चित् ॥ ५ ॥

येषां न चेतो ललनासु लग्नं मग्नं न साहित्यसुधासमुद्रे ।
ज्ञास्यन्ति ते किं मम हा प्रयासानन्धा यथा वारवधूविलासान् ॥ ६ ॥

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु ।
गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ ७ ॥

आदौ निदानविधिना विदध्याद् व्याधिनिश्चयम् ।
ततः साध्यं समीक्षेत पश्चाद्भिषगुपाचरेत् ॥ ८ ॥

औषधं मूढवैद्यानां त्यजन्तु ज्वरपीडिताः ।
परसंसर्गसंसक्तं कलत्रमिव साधवः ॥ ९ ॥

पथ्ये सति गदार्तस्य किमौषधनिषेवणैः ।
पथ्येऽसति गदार्तस्य किमौषधनिषेवणैः ॥ १० ॥

महीन्द्रमहिलात्रपाप्रदपदारविन्दे तथा
पयोनिधिपयस्तती जलधरैरुपात्ता यथा ।
मम प्रकृतिनीरसा नृपभिषग्भिरङ्गीकृता
भविष्यति सरस्वती रसवती मुरारापतेः ॥ ११ ॥

इह गमिष्यति वैद्यमतिः श्रमं प्रथममेव पुनस्तु महत्सुखम् ।
प्रियतमस्य मृगाक्षि समागमे नवकरग्रहणा गृहिणी यथा ॥ १२ ॥
यतः सर्वेषु रोगेषु प्रायशो बलवाञ्ज्वरः ।
अतस्तस्य प्रतीकारं प्रथमं ब्रूमहे वयम् ॥ १३ ॥
देवदारुघनाविश्वा वृहतीद्वयपाचनम् ।
ज्वरे पूर्वं पिवेच्चारु पयोधरधराधरे ॥ १४ ॥
अधुना शृणु तन्वि लङ्घनं ज्वरितानां प्रथमं प्रशस्यते ।
सुरपादपधान्यधावनीयुगविश्वौषधिपाचनं ततः ॥ १५ ॥
छिन्नोद्भवाम्भोधरधन्वयासैः किराततिक्ताम्बुदरेणुयासैः ।
विश्वावृषाम्भोधरधन्वयासैः क्वाथो मरुत्पित्तकफज्वरेषु ॥ १६ ॥
उशीरकलशीमहौषधकिरातकाम्भोधर-
स्थिरावृहतिकाद्वयामृतलतात्रिकण्टैः कृतम् ।
कषायकममुं पिवेत्पवनजज्वरव्याकुलः
पुमान् दशशतच्छदच्छदमदग्रसल्लोचने ॥ १७ ॥
पीयूषलोकपाञ्चालीचरणानां कषायकः ।
पीयमानः प्रिये ! हन्ति हनुमज्जनकज्वरम् ॥ १८ ॥
छिन्नोद्भवापर्पटवारिवाहभूनिम्वशुण्ठीजनितः कषायः ।
समीरपित्तज्वरजर्जराणां करोति भद्रं खलु पञ्चभद्रः ॥ १९ ॥
मृगमदविलसल्ललाटमध्ये मृगमदहारिणि ! लोचनद्वयेन ।
मृगनृपतितनूदरश्रि ! पित्तज्वरमहह द्यति रैणवः कषायः ॥ २० ॥
एक एव खलु पैत्तिकज्वरं हन्ति पर्पटकृतः कषायकः ।
चन्दनोदकमहौषधान्वितश्चेत्तदा किमु पुनर्विचारणा ॥ २१ ॥
आरोग्यलक्ष्मीरुपयाति पित्तज्वरातुरं रेणुकषायभाजम् ।
मां त्वं यथा रत्नकले स्मरार्तं कृतप्रकोपोपशमं सखीभिः ॥ २२ ॥
मानं त्यजेत्प्रेयसि मन्दवायुज्वलल्लतासङ्गमनर्घ्यहारे ! ।
रेवातटे पश्य रमस्व वेणुक्वाणो यतोऽत्रास्ति निरस्तपान्थः ॥ २३ ॥
द्राक्षापर्पटराजवृक्षकटुकामुस्ताऽभयानां जलं
मूर्च्छाशोषनिदाघतृट् प्रलपनभ्रान्त्याऽऽढ्यजर्वपित्तज्वरे ।
दुःस्पर्शप्रमदाकिरातकटुकासिंहास्यरेणूद्भवः
क्वाथः शर्करयान्वितोऽथ हरते तृड्दाहपित्तज्वरान् ॥ २४ ॥
अहो ! किमर्थं वहुभिः कषायैः पराशराद्यैर्मुनिभिः प्रदिष्टैः ।
छिन्नाशिवापर्पटतोयदानात् पित्तज्वरः किं न सरीसरीति ॥ २५ ॥
लोहितचन्दनपद्मकधान्यच्छिन्नरुहापिचुमन्दकषायः ।
पित्तकफज्वरदाहपिपासावान्तिविनाशहुताशकरः स्यात् ॥ २६ ॥

जलजलजजलवाहरेणुविश्वौषधशिशिरैः शिशिरं जलं शृतं स्यात् ।
सपदि सुखकरं सदा सदाहज्वरतृषि योज्यमिदं नवज्वरेऽपि ॥ २७॥
सहस्रधौतेन घृतेन कर्तुरभ्यङ्गमोषः कृशतां बिभर्ति ।
अन्याङ्गनासङ्गमसादरस्य स्वीयेषु दारेषु यथाभिलाषः ॥ २८ ॥
अमलैः कमलैरथानिलैरलसैः पुष्परसैः समन्वितैः ।
जलकेलिकलाकुतूहलैरपि पित्तज्वरजा रुजो जयेत् ॥ २९ ॥
श्रीखण्डमण्डितकलेवरवल्लरीणां
मुक्ताफलाकुलविशालकुचस्थलीनाम् ।
वैदग्ध्यमुग्धवचसां सुविलासिनीना-
मालिङ्गनं सकलदाहमपाकरोति ॥ ३० ॥
शय्या पल्लवपद्मपत्ररचिता वासो वयस्यैः समं
कान्तारे कुसुमस्फुरत्तरुवरे वीणान्वितं गायनम् ।
आलापाश्च शुकालिकोकिलकृताः कान्ताश्च कान्ताः कथा
वाताश्चामलवालकव्यजनजा दाघं निराकुर्वते ॥ ३१ ॥
तृड्दाहमोहाः प्रशमं प्रयान्ति निम्बप्रवालोत्थितफेनलेपात् ।
यथा नराणां धनिनां धनानि समागमाद् वारविलासिनीनाम् ॥ ३२ ॥
द्राक्षाऽऽरग्वधयोः क्वाथः पीतः पित्तज्वरापहः ।
पर्पटाब्दामृतातिक्ता युक्तश्चेत् किं सुधा ततः ॥ ३३ ॥
अयि नितम्बिनि ! गायनलालसे ! मधुरचारिणि ! काममदालसे ! ।
हरति दाहमघर्मकरानने ! हिमहिमांशुजलैरनुलेपनम् ॥३४॥
शुभ्राभ्रविभ्रमधरे ! शशाङ्ककरसुन्दरे !
चन्दनैश्चर्चिते हर्म्ये स्वापस्तापमपोहति ॥ ३५ ॥
पित्तज्वरे किं रसफाण्टलेपैः किं वा कषायैरमृतेन किं वा ।
पेयं प्रियाया मुखमेकमेव लोलिम्बराजेन सदाऽनुभूतम् ॥ ३६ ॥
प्राणप्रेयसि मा पिबन्तु पुरुषाः पित्तज्वरव्याकुला
नानावल्लिजलं विलम्बितफलं पाने विषादप्रदम् ।
ततैः किं क्रियतां चिकित्सकपते ! मुग्धे ! सुखं सेव्यतां
सद्यस्तापहरः सुधाधिकतरः कान्ताधरः केवलम् ॥ ३७ ॥
यदि पर्युषितं धान्यसलिलं सितया समम् ।
प्रभातसमये पीतमन्तर्दाहं नियच्छति ॥ ३८ ॥
श्रीपर्णिनीज्वलनमन्थरसन्तदूतीटण्टूकबिल्वमिति तत्पृथुपञ्चमूलम् ।
व्याघ्रीबृहत्पतिगुहातिगुहाश्वदंष्ट्रासंयुक्तमेतदिति तत्कथितं कनीयम् ॥३९॥
पञ्चमूल्यमृतामुस्ताविश्वभूनिम्बसाधितः ।
कषायः शमयत्याशु वायुमायुभवं ज्वरम् ॥ ४० ॥

शृङ्गीकणाकट्फलपौष्करराणां क्षौद्रान्वितानां विहितोऽवलेहः ।
श्वासेन कासेनयुतं वलासज्वरं जयेदत्र न कापि शङ्का ॥ ४१ ॥
भार्ङ्गीगुडूचीघनदारुसिंही शुण्ठीकणापुष्करजः कषायः ।
ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधां करोति प्ररुचिं तनोति ॥ ४२ ॥

मम द्वयं विस्मयमातनोति तिक्ताकषायो मुखतिक्तताघ्नः ।
निपीडितोरोजसरोजकोषा योषा प्रमोदं प्रचुरं प्रयाति ॥ ४३ ॥

क्वाथः कट्फलकतृणाब्दधनिकाशृङ्ग्युग्रगन्धाऽभया
भार्गीपर्पटविश्वदेवतरुजो बाह्लीकमध्वन्वितः ।
कासश्वासमुखामयज्वरवलश्लेष्मप्रकोपं हरेत्
तद्वत्कोमलकण्ठि ! कण्ठजनितां पीडाञ्च जेह्लीयते ॥ ४४ ॥

शमयति केसरमरुचिं सलवणं घृतमाशु मातुलुङ्गस्य ।
दाडिमचर्वणमथवा चरको रुचिकारि सूचयामास ॥ ४५ ॥
अरुचिं द्यति लुङ्गकेसरं सघृतं सैन्धवचूर्णमिश्रितम् ।
रुचिमम्बुरुहस्य तन्वि ! ते नयनं खञ्जनगञ्जनं यथा ॥ ४६ ॥

ग्रन्थीन्द्रजाऽमरपुरक्रिमिशत्रुभार्ङ्गी
भृङ्गत्रिकट्वनलकट्फलपौष्कराणाम् ।
रास्नाऽभयाबृहतिकाद्वयदीप्यभूत-
केशीकिरातकवचाचविकावृकीनाम् ॥ ४७ ॥

क्वाथो हन्यात्सन्निपातान्समूलान् बुद्धिभ्रंशस्वेदशैत्यप्रलापान् ।
शूलाध्मानं विद्रधिश्लेष्मवातान् वातव्याधिं सूतिकानाञ्च तद्वत् ॥४८॥

अर्कानन्ताकिरातामरतरुरसनासिन्दुवारोग्रगन्धा
तर्कारीशिग्रुपञ्चोषणघुणदयिता मार्कवाणां कषायः ।
सद्यस्तीव्रांस्त्रिदोषानपहरति धनुर्मारुतं दन्तबन्धं
शैत्यं गात्रेषु गाढं श्वसनकसनकं सूतिकावातरोगान् ॥४९॥
तिक्तातिक्तकपर्पटामृतशटीरास्नाकणापौष्कर-
त्रायन्तीबृहतीसुरौषधशिवादुस्पर्शभार्ङ्गीकृतः ।
क्वाथो नाशयति त्रिदोषनिकरं स्वापं दिवा जागरं
नक्तं तृण्मुखशोषदाहकसनं श्वासानशेषानपि ॥ ५० ॥

सन्निपातस्य कालस्य कश्चिद्भेदो न विद्यते ।
चिकित्सको जयेद्यस्तं तस्मात् कोऽस्ति प्रतापवान् ॥ ५१ ॥
त्रिदोषाजगरग्रस्तं मोचयेद् यस्तु वैद्यराट् ।
आत्मापि तस्मै दातव्यः किम्पुनः कनकादयः ॥ ५२ ॥

यः शोफः श्रुतिमूलजः सुकठिनः शान्ते त्रिदोषज्वरे
रक्तं तत्र जलौकया परिहरेत्सर्पिः पिबेच्चातुरः ।
रास्नानागरलुङ्गमूलहुतभुग्दार्व्यग्निमन्थैः समै—
र्लेपः स्यादरविन्दवन्द्यनयने शोथव्यथाध्वंसनः ॥ ५३ ॥

शूलात्पार्श्वशिरः स्थितात्कसनतः श्वासाच्च जीर्णज्वरान्
मुक्तः स्यात् पुरुषः पयः परिपिबन्नग्न्चाङ्घ्रिणा पाचितम् ।
एकासौ गुडपिप्पली विजयते जीर्णज्वराऽजीर्णरुक्
क्षुन्मान्द्याऽरुचिपाण्डुजन्तुकसनश्वासान् किमन्यौषधैः ॥ ५४ ॥

जीर्णज्वरं कफकृतं कणया समेत-
श्छिन्नोद्भवोद्भव कषायक एष हन्ति ।
रामो दशास्यमिव राम इव प्रलम्बं
रामो यथा समरमूर्धनि कार्तवीर्यम् ॥ ५५ ॥

पञ्चमूलीकषायस्य सकृष्णस्य निषेवणात् ।
जीर्णज्वरः कफकृतो विदधाति पलायनम् ॥ ५६ ॥

शटी शुण्ठी रेणुः सुरतरुरनन्ता च बृहती
घनस्तिक्ता तिक्तं खलु नवभिरेभिर्विरचितः ।
कषायः पीतोऽयं मधुकणविमिश्रः शमयति
त्रिदोषं निश्शेषं विषममपि जीर्णज्वरमपि ॥ ५७ ॥

वासापटोलत्रिफला द्राक्षाशम्याकनिम्बजः ।
समधुः ससितः क्वाथो हन्यादैकाहिकं ज्वरम् ॥ ५८ ॥

तन्वङ्गि गङ्गोत्तरतीरभूमौ ममार हा कोऽप्यसुतस्तपस्वी ।
जलाञ्जलिं तस्य कृते ददातु सैकाहिकः स्याद्यदितेऽनुजन्मा ॥ ५९ ॥

सशिशिरः सघनः समहौषधः सनलदः सकणः सपयोधरः ।
समधुशर्कर एष कषायको जयति बालमृगाक्षि तृतीयकम् ॥ ६० ॥

चातुर्थिको नश्यति रामठस्य घृतेन जीर्णेन युतस्य नस्यात् ।
लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ६१ ॥

अखण्डितशरत्काल - कलानिधिसमानने ।
चातुर्थिकहरं नस्यं मुनिद्रुमदलाम्बुना ॥ ६२ ॥

मधुखण्डयुतं वृषविश्वशिवा सुरदारुशिवा स्थिरवारिशृतम् ।
अयि हन्ति चतुर्थदिनस्य भवं ज्वरमाशु कुभृत्य इवाधिपतिम् ॥ ६३ ॥

सुरदारुशिवाशिवास्थिरावृषविश्वैः कथितः कषायकः ।
मधुना सितया समन्वितः परिपीतः शमयेच्चतुर्थकम् ॥ ६४ ॥

तक्रं त्र्यूषणचूर्णयुक्तमथवा मद्यं हसन्तीं सतीं
तद्वत्कम्बलरल्लकानथ कुथां शीतातुरः शीलयेत् ।
आलिङ्गेदथवा मुहुर्दृढतरं तारुण्यमद्यालसाः
काश्मीरागुरुलिप्तपीवरकुचाः कामं कुरङ्गीदृशः ॥ ६५ ॥

शक्राह्वदद्रुघ्नवृषामृतातां निर्गुण्डिकाभृङ्गमहौषधानाम् ।
क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेता ॥ ६६ ॥

वाङ्माधुर्यजितामृतेऽमृतलता लक्ष्मीशिवाभे शिवा
विश्वं विश्ववरे घनो घनकुचे सिंही च सिंहोदरि ।
एभिः पञ्चभिरौषधैर्मधुकणामिश्रः कषायः कृतः
पीतश्चेद्विषमज्वरः किमु तदा तन्वङ्गि न क्षीयते ॥ ६७ ॥

सनागरायाः सपयोधरायाः ससिंहिकायाः सगुडूचिकायाः ।
धात्र्याः कषायो मधुना विमिश्रः कणाविमिश्रो विषमज्वरघ्नः ॥ ६८ ॥

नान्यानि मान्यानि किमौषधानि परन्तु कान्ते न रसोनकल्कात् ।
तैलेन युक्तादपरः प्रयोगो महासमीरे विषमज्वरेऽपि ॥ ६९ ॥

भवति विषमहन्त्री चेतकी क्षौद्रयुक्ता
भवति विषमहन्त्री पिप्पली वर्धमाना ।
विषमरुजमजाजी हन्ति युक्ता गुडेन
प्रशमयति तथोग्रा सेव्यमाना गुडेन ॥ ७० ॥

स्वकान्तिजितरोचने चपललोचने मालती-
प्रसूननिकरस्फुरत्कबरि पञ्चवक्त्रोदरि ।
पटोलकटुरोहिणीमधुकचेतकीमुस्तका-
प्रकल्पितकषायको विषममाशु जेजीयते ॥ ७१ ॥

किमु भ्रमयसि प्रिये कुवलयं कराभ्यामिदं
मदीयवचनं सुधारससमं समाकर्णय ।
पुराणविषमज्वरे कुलकनिम्बसिंहीन्द्रजा-
ऽमृताघनकषायको मधुयुतो वरीवृत्यते ॥ ७२ ॥
यो भजेत्समधुश्यामां हे हेमकलशस्तनि ! ।
विषमेषु व्यथास्तस्य न भवन्ति कदाचन ॥ ७३ ॥

क्षणमपि चलतां जहीहि मुग्धे ! शृणु वचनं मम तन्वि ! सावधाना ।
वसति शिरसि मेघनादमूले व्रजतितरां विषमो विलासदृष्टे ॥ ७४ ॥
विषममपि हरत्यसौ कषायो मधुमधुरो मदिरामृताशिवानाम् ।
अहमिव सततं तत्र प्रकोपं चरणसरोरुहयोर्लुठन् हठेन ॥ ७५ ॥

अबले कमलातनुरक्तकले चलदृक्कमले धृतकामकले ।
अमृताब्दशिवं मधुमद्विषमे विषमे विषमेषु विलासरते ॥ ७६ ॥

अयि ! कुशाग्रसमानमते ! मते ! मतिमतामतिमन्मथमन्थरे ! ।
ज्वरहरं रुगरिष्टशिवावचायवहविर्जतुसर्षपधूपनम् ॥ ७७ ॥

तिक्तोशीरबलाधान्यपर्पटाम्भोधरैः कृतः ।
क्वाथः पुनः समायान्तं ज्वरं शीघ्रं विनाशयेत् ॥ ७८ ॥

गोपीद्वयामलकीस्थिरामगधजातिक्तापयः पालिनी
द्राक्षाश्रीफलवावनीहिमविषामुस्तेन्द्रजैः साधितम् ।
स्यादाज्यं विषमज्वरक्षयशिरः पार्श्वव्यथारोचक-
च्छर्दिः शोफहलीमकप्रशमनं लीलालतामञ्जरि ! ॥ ७९ ॥

चलदलतरुसेवा होममन्त्रौ त्रिनेत्र-
द्विजसुरगुरुपूजा कृष्णनाम्नां सहस्रम् ।
मणिघृतिपरिदानान्याशिषस्तापसानां
सकलमिदमरिष्टं स्पष्टमष्टज्वराणाम् ॥ ८० ॥

चलदलतरुसेवा विप्रदेवार्चनश्च
ग्रहभजनमजस्रं विष्णुनाम्नां सहस्रम् ।
हरति सुमणिमन्त्राधारणं चौषधीनां
सकलमिदमरिष्टं स्पष्टमष्टज्वराणाम् ॥ ८१ ॥

अयि रत्नकले ! कलानिधे ! कुशले ! कोकिलकोमलस्वरे ! ।
ज्वरवाञ्ज्वरवर्जितोऽथवा लघुकुर्यादशनं दिनात्यये ॥ ८२ ॥

इति श्रीमद्दिवाकरपण्डितकुलालङ्कारलोलिम्बराजविरचिते
वैद्यजीवने ज्वरप्रतीकारो नाम
प्रथमो विलासः
समाप्तः ।

## द्वितीयो विलासः

अमृतातिविषासुरराजयवस्तनयित्नुकिरातकविश्वपयः ।
अतिसारहरं ज्वरनाशकरं शृणु निर्जितकुञ्जरकुम्भकुचे ! ॥ १ ॥

शीतोशीरकयुग्मवत्सकवृकीपद्माह्वयाम्यामृता
भूनिम्बाम्बुदवालबिल्वकविषाविश्वौषधैः साधितः ।
क्वाथो माक्षिकसाक्षिको विजयते हृल्लासतृष्णावमी-
दाहारोचकसङ्गभङ्गचतुरः सर्वातिसारज्वरान् ॥ २ ॥

पञ्चाङ्घ्रिवृक्ययब्दबलेन्द्रबीजत्वक्सेव्यतिक्तामृतविश्वबिल्वैः ।
ज्वरातिसारान् सवमीन् सकासान् सश्वासशूलान् शमयेत्कषायः ॥ ३ ॥

कफाधिके वा पवनाधिके वा द्वयाधिके वा गुरुपञ्चमूलम् ।
पित्ताधिके वा लघुपञ्चमूल पुनः पुनः पृच्छसि किं मृगाक्षि ! ॥ ४ ॥

सदेवदारुः सविषः सपाठः सजन्तुशत्रुः सघनः सतीक्ष्णः ।
सवत्सकःक्वाथ उदाहृतोऽसौ शोकातिसाराम्बुधिकुम्भजन्मा ॥ ५ ॥

अयि प्रिये ! प्रीतिभृतां मुरारौ किं वालकश्रीधनधान्यविश्वैः ।
यस्याप्यतीसाररुजा न तस्य किं वालकश्रीधनधान्यविश्वैः ॥ ६ ॥

पित्तातिसारो धान्याम्बुबिल्वाब्दानां निरुध्यते ।
केनाऽत्र ज्ञायते कर्ता पण्डितेन त्वया विना ॥ ७ ॥

इन्द्रजमेघमदाकुसुमश्रीरोध्रमहौषधमोचरसानाम् ।
चूर्णमिदं गुडतक्रसमेतं हन्त्यचिरादतिसारमुदारम् ॥ ८ ॥

कल्याणि काञ्चनलताललिताङ्गयष्टे !
ताम्बूलशालिवदने ! ललने ! शृणुष्व ।
शुण्ठीमदाकुसुममोचरसाजमोदा-
स्तक्रान्विताःप्रशमयन्त्यतिसारमुग्रम् ॥ ९ ॥

अतिसारप्रशमनी चित्रपत्रकशोभिता ।
वृद्धिदाऽतनुवल्लेश्च श्यामा श्यामेव शोभते ॥ १० ॥

बाले ! बाललताप्रवालललिताऽऽकाराङ्घ्रिहस्ताधरे !
मल्लीमाल्यलसत्कुचक्षितिधरे ! रत्नज्वलन्मेखले ! ।
चञ्चत्कुण्डलमण्डले ! विजयते रक्तामशूलान्विता-
ऽतीसारं कुटजाब्दबिल्वकविषोदीच्यै कषायः कृतः ॥ ११ ॥

धातक्यामलकीपयोधरवृकीकद्रङ्ग्यष्टीमधु-
श्रीजम्ब्वाम्रफलास्थिनागरविषाह्लीबेरलोध्रेन्द्रजैः ।
तुल्यांशैर्विहितं सतण्डुलजलं गङ्गाधराऽऽख्यं महच्
चूर्णं तूर्णमपाकरोति सकलं जीर्णातिसारं परम् ॥ १२ ॥
अयि कन्दुकनिन्दकस्तनि ! प्रमदारूपमदापहारिणि ! ।
रुधिरातिसृतौ कषायकः समधुर्दाडिमवत्सकत्वचः ॥ १३ ॥
चन्दनं विमलतण्डुलाम्बुना संयुतं मधुयुतं सितायुतम् ।
तृड्विखण्डनमसृग्विखण्डनं खण्डनं प्रचुरदाहमेहयोः ॥ १४ ॥
कुक्षिशूलामशूलघ्नं विविधास्रातिसारजित् ।
सेवेत सगुडं विल्वं विल्वतुल्यपयोधरे ! ॥ १५ ॥
तृट्श्वासकासज्वरशोफमूर्च्छा हिक्कान्नविद्वेषणवान्तिशूलैः ।
युक्तोऽतिसारी स्मरतु प्रसह्य गोविन्द दामोदर माधवेति ॥ १६ ॥
जातीफलं नागरसर्पफेने खर्जूरकं पिष्टमिदं समांशम् ।
सर्वैः समारण्यकरीषभस्म प्रक्षिप्य खल्ले च विमर्दितं सत् ॥ १७ ॥
निष्कार्धमात्रं भिषजा प्रयोज्यं द्विवारमेतच्छुभतण्डुलोदैः ।
जीर्णातिसारे रुधिरामयुक्ते हितः सशूले वहुवेगयुक्ते ॥ १८ ॥
यवानीनागरोशीर-धनिकातिविषाघनैः ।
वलाविल्वद्विपर्णीभिर्दीपनं पाचनं स्मृतम् ॥ १९ ॥
पुनर्नवावल्लिजवाणपुङ्खाविश्वाग्निपथ्याचिरविल्वविल्वैः ।
कृतः कषायः शमयेदशेषान् दुर्नामगुल्मग्रहणीविकारान् ॥ २० ॥
शुण्ठीछिन्नरुहाविषाजलवरैस्तुल्यैः कषायः कृतो
मन्दाग्नौ ग्रहणीगदेऽपि सततं सामानुवन्धे हितः ।
शुण्ठीकल्ककृतं घृतं प्रपिबतः पाण्डवामकासापहं
स्याद्वायोरनुलोमनं ग्रहणिका वेगेन जङ्गम्यते ॥ २१ ॥
पाठाविषाकुटजवृक्षफलत्वगब्द-
तिक्तामदारसजनागरबिल्वचूर्णम् ।
सक्षौद्रतण्डुलजलं ग्रहणीप्रवाह-
रक्तप्रवाहगुदरुग्गुदजेषु दद्यात् ॥ २२ ॥
तुल्यांशं सकलं किरातकटुकामुस्तेन्द्रजत्र्यूषणं
भागश्चन्द्रकलामितः कुटजतो भागद्वयं चित्रकात् ।
चूर्णं रत्नकलाभिधं गुडपयोयुक्तं च पाण्डुज्वरा-
ऽतीसारारुचिकामलाग्रहणिकागुल्मप्रमेहापहम् ॥ २३ ॥
अजाजिका हिङ्गुपटुत्रयाणां क्षारद्वयग्रन्थिकटुत्रयाणाम् ।
चव्याजमोदामिशिचित्रकाणां चूर्णं समांशं विदधीत धीमान् ॥ २४ ॥

कोष्णाम्बुना कोलरसेन युक्तं तक्रान्वितं काञ्जिकमिश्रितं वा ।
पेपीयमानं सुखदं नृणां स्याद् गुल्मग्रहण्यामगुदाङ्कुरेषु ॥ २५ ॥

क्षारद्वन्द्वपटुत्रिकत्रिकटुकैश्चव्याजमोदानलैः
कृष्णामूलकहिङ्गुजीरमिशिभिस्तुल्यैर्विधेयं रजः ।
पीतं कोष्णजलेन कोलपयसा तक्रेण वान्यौषधाद्
हृत्क्षुद्गुल्मगुदाङ्कुरग्रहणिषु प्रायः प्रियं प्रेयसि ! ॥ २६ ॥

द्विक्षारषट्कटुपटुव्रजहिङ्गुदीप्यैः
स्यात्सारलुङ्गवदरैकरसेन युक्तम् ।
श्लेष्माऽनिलग्रहणिकागुदजेषु शस्तं
लोकत्रयैकमति ! दीपनपाचनेऽलम् ॥ २७ ॥

चूर्णं चित्रकचव्यश्रीविश्वभेषजनिर्मितम् ।
तक्रेण सहितं हन्ति ग्रहणीं दुःखकारिणीम् ॥ २८ ॥

रुचकाग्निमरीचानां चूर्णं तक्रेण सेवितम् ।
ग्रहण्युदरगुल्मार्शः क्षुन्मान्द्यप्लीहनाशकृत् ॥ २९ ॥

आज्यं पयोधरजलेन्द्रजवालविल्व-
ह्रीबेरमोचरसकल्कयुतं विपक्वम् ।
आमानुवन्धसहितं रुधिरान्वितञ्च
सद्यो निहन्ति गृहिणि!ग्रहणीविकारम् ॥ ३० ॥

इति श्रीमद्दिवाकरपण्डितकुलालङ्कारलोलिम्बराजविरचिते
वैद्यजीवने अतिसारग्रहणीप्रतिकारो नाम
द्वितीयो विलासः
समाप्तः ।

—:०:—

## तृतीयो विलासः

अतः परं कोमलवाणि ! कासश्वासप्रतीकारमुदीरयामः ।
निहन्ति कासं गुरुपञ्चमूलीकृतः कषायश्चपलासहायः ॥ १ ॥
घनविश्वशिवागुडजागुटिका त्रिदिनं वदनाम्बुजमध्यधृता ।
हरति श्वसनं कसनं ललने ललनेव हिमं हृदयोपगता ॥ २ ॥
अजस्य मूत्रस्य शतं पलानां शतं पलानाञ्च कलिद्रुमस्य ।
पक्वं समध्वाशु निहन्ति कासं श्वासञ्च तद्वतसबलं बलासम् ॥ ३ ॥

आर्द्रादर्धतुला गुडादपि तथाऽर्द्धांशं च कुस्तुम्बरी
दीप्यायोजरणात्रिजातजलदाद्द्वाव्यां पचेद्युक्तितः ।
लेहो रत्नकले ! तवैव कथितः प्राणप्रियाया मया
कासार्शोज्वरपीनसश्वयथुरुग्गुल्मक्षयध्वंसनः ॥ ४ ॥
रास्नाबलापद्मकदेवदारुफलत्रिकत्र्यूषणबिल्वचूर्णम् ।
चिन्तामणिक्षौद्रघृतोपपन्न श्वासं च कासं च निराकरोति ॥ ५ ॥
वासाहरिद्रामगधागुडूचीभार्ङ्गीघनानागरधावनीनाम् ।
क्वाथेन मारीचरजान्वितेन श्वासः शमं याति न कस्य पुंसः॥ ६ ॥
तुल्या लवङ्गमरिचाक्षफलत्वच स्युः
सर्वैः समो निगदितः खदिरस्य सारः ।
बब्बूलवृक्षजकपाययुतं च चूर्ण
कासान्निहन्ति गुटिका घटिकाष्टकान्ते ॥ ७ ॥
वातं निर्दलयन् कफं कवलयन्नुन्मीलयन् पीनसं
दृष्टिं निर्मलयन् प्रभां प्रवलयन् हृद्रोगमुत्सारयन्।
निःशेषं जठरामयं प्रशमयन्नुद्दीपयन् पावकं-
कासश्वासनिरासमाधनमसौ विश्वाकपायःस्मृतः॥ ८ ॥
रूपं कीदृक कमलवदने ! नुः परे सौ गिरेः स्यात्
सम्बुद्धिः का मधुरवचने ! काग्निबीजस्य षष्ठी।
कस्य क्वाथः श्वसनशमनो वल्लभेनेति पृष्टा
विद्वद्वन्द्या द्रुतमिदमदात् सोत्तरं नागरस्य ॥ ९ ॥
अयि रत्नकल ! नीलनलिनच्छदवीक्षणे ।
सिंहीकपायः सकणः कासग्रासकरः क्षणात् ॥ १० ॥
पिप्पलीपिप्पलीमूलविभीतकमहोषधैः ।
मधुना सेवितैः कासः प्रशाम्यति कुतूहलम् ॥ ११ ॥
कटुतैलेन संयुक्तो गुडो यावन्न सेवितः ।
तावन्नश्यति किं श्वासः पीयूषमधुराधरे ॥ १२ ॥
रावणस्य सुतो हन्यान् मुखवारिजधारितः ।
श्वसनं कसनञ्चापि तमिवानिलनन्दनः ॥ १३ ॥
अयि प्राणप्रिये ! जातीफललोहित लोचने ! ।
शुण्डी भार्ङ्गीकृतः क्वाथः कसनश्वसनाहिराट् ॥ १४ ॥
अस्ति प्राणपते ! मम प्रियतमा कन्दर्पलीलासखी
कासक्लेशवशादतीव कृशतां प्राप्तास्ति सा साम्प्रतम् ।
तस्यास्त्वं कथयोपचारमधुना क्षौद्रान्वितं दीयतां
विश्वग्रन्थिकणा कलिद्रुमभवं चूर्णं चकोरेक्षणे ॥ १५ ॥

संयुक्तो गुडसर्पिभ्यां चूर्णस्त्रिकटुसम्भवः ।
निहन्ति तरसा श्वासं त्रासानिव सतां हरिः ॥ १६ ॥
शृङ्गवेररसो येन मधुना सह सेवितः ।
श्वासकासभयं तस्य न कदाचित्कृशोदरि ! ॥ १७ ॥
रतिवल्लभचाम्पेय-चारुचापकलेवरे ! ।
एक एवार्द्रकरसः समधुः श्वासकासजित् ॥ १८ ॥

पुलोमजावल्लभसूनुपत्नी तातात्मभूशेखरवाहनस्य ।
सौन्दर्यदूरीकृतरामरामे कषायकः कासमीरसर्पः ॥ १९ ॥
अयि तालफलस्तनि ! रत्नकले ! वृषवारि पिबेन्मधुमत्कसने ।
न वदामि कदापि बुधाधिपतेरिदमौषधमौषधिनाथमुखि ! ॥ २० ॥
फलत्रयं छिन्नरुहा सचित्रा रास्ना कृमिघ्नं सकटुत्रयञ्च ।
चूर्णं समांशं सितया समेतं कासं जयेन्नाऽत्र विचारणीयम् ॥ २१ ॥
दशमूलकषायमिश्रितं वा ललने ! विश्वकषायमिश्रितं वा ।
प्रपिबेत्कटिकुक्षिवस्तिशूले ध्रुवमेरण्डजमेकमेव तैलम् ॥ २२ ॥
रास्नामृतानागरदेवदारुपञ्चाङ्घ्रियुग्मेन्द्रयवैः कषायः ।
रुवूकतैलेन समन्वितोऽयं हर्ता भवेदामसमीरणस्य ॥ २३ ॥
विलासिनी विलासेन विलासि हृदयं यथा ।
तथा गुडूची विश्वेन हरेदामसमीरणम् ॥ २४ ॥

सम्यक्स्विन्नाश्छगलजरसे काननोत्थाः कुलत्था-
श्चैले बद्धाः परिहृततुषाः प्रौढसीमन्तिनीभिः ।
सूक्ष्मं पिष्टाः पटुरसनिशाचूर्णपूर्णाः क्षपायां
चक्षुः क्षिप्ताः सकलरुधिरं संहरन्ति त्र्यहेण ॥ २५ ॥

लोलिम्बराजकविना वनितावतंसे
शिग्रोरमुष्य कथितोऽस्ति किमूपयोगः ।
एतस्य पल्लवरसात्समधोः किमन्यद्
दृग्व्याधिमात्रहरणे महिलाग्रगण्ये ॥ २६ ॥

जयति मारुतपित्तकफैः कृतां बहुविधामपि लोचनयोर्व्यथाम् ।
नयनोर्विहितो मधुनान्वितो वहलपल्लवपल्लवजोरसः ॥ २७ ॥

कुवलयनयनेऽर्जुनं कफोऽब्धेः सह सितया सुनिराचरीकरीति ।
प्रियकरमिव कामिनी नवोढा लघुकुचशालिनि वक्षसि प्रयुक्तम् ॥ २८ ॥

कुवलयनयनेऽर्जुनं सखण्डं जलधिकफो नितरां निराकरोति ।
तरुण इव नितम्बिनी नितम्बाम्बरमतनुज्वरजर्जरीकृताङ्गः ॥ २९ ॥

इति निर्गदितमार्थ ! नेत्ररोगातुराणां
निशिसमधुघृताग्र्या सेव्यमाना सुखाय ।
अयि नवशिशुलीलालोलदृष्टे ! त्वमग्र्या
जनयसि बत कस्माद् वैपरीत्यं परन्तु ॥ ३० ॥
निराकरोति नक्तान्ध्यं सगोमयरसा कणा ।
यथा रतेन रमणी रमणस्य महाबलम् ॥ ३१ ॥
निराकरोति नक्तान्ध्यं तथाऽऽविशक्तृता कणा ।
रमणी रमणस्येव बलं भुक्त्वा पुनः पुनः ॥ ३२ ॥
श्यामेऽश्यामे प्रियश्यामे श्यामावोधितमानसे ।
शुक्रं शमयति क्षिप्र माक्षिकं माक्षिकान्वितम् ॥ ३३ ॥
त्रिफलावृषभूनिम्बनिम्बतिक्तामृताकृतः ।
क्वाथो मधुयुतः पीतः कामलापाण्डुरोगजित् ॥ ३४ ॥
देवदालीफलरसो नस्यतो हन्ति कामलाम् ।
सन्देहो नात्र सम्फुल्लनीलोत्पलविलोचने ॥ ३५ ॥
गिरिमृद्रात्रिधात्रीणामञ्जन कामलापहम् ।
इदं नहि भवेन्मिथ्या शपथस्तु तवाङ्गने ! ॥ ३६ ॥
अये मनोज्ञकुण्डले ! स्फुरन्मुखेन्दुमण्डले ! ।
गवां पयः सनागरं निहन्ति कामलाभरम् ॥ ३७ ॥
पिचुमन्दरसेन मिश्रितैः पिचुमन्दानिलशत्रुवीजकैः ।
घटितां वटिकां भगान्तरे भगशूलप्रशमाय धारयेत् ॥ ३८ ॥
तरुण्युत्तरणीमूलं छागीसर्पिः सनागरम् ।
शिवशस्त्राभिधां वाधां योनिस्थां हन्ति सत्वरम् ॥ ३९ ॥
कटङ्कटेरी रसनाऽब्दवासा भूनिम्बभल्लीतिलजः कषायः ।
क्षौद्रान्वितश्चञ्चललोचनानां नानाविधानि प्रदराणि हन्यात् ॥ ४१ ॥
कुवलयपदलनेत्रे ! तण्डुलीयस्य मूलं
रसजमपि समांशं भेषजद्वन्द्वमेतत् ।
हिमकरमुखि ! युक्तं तण्डुलाम्भोमधुभ्यां
प्रदरदरमुदीर्णं सुन्दरीणां निहन्ति ॥ ४२ ॥
कविपुरःसरवैद्यशिरोमणे ! रसजतण्डुलकाङ्घ्रिभवं रजः ।
समधुतण्डुलवारिनिवारयेन् मृगदृशां प्रदरं प्रदरं द्रुतम् ॥ ४३ ॥
मूलं गवाक्ष्याः स्मरमन्दिरस्थं पुष्पावरोधस्य वधं करोति ।
अभर्तृकाणां व्यभिचारिणीनां योगोऽयमेवं द्रुतगर्भपाते ॥ ४४ ॥
मध्वाज्यष्टीमधुलुङ्गमूलं निपीय सूते सुमुखी क्षणेन ।
सतण्डुलाम्भः सितधान्यकल्कपानाद् वमिर्गच्छति गर्भिणीनाम् ॥४५॥

धान्याब्दाम्बुद्वयारल्वमृतविषवलारेणुदुःस्पर्शशीतं
गर्भिण्याः सूतिकायाः अपि रुधिरगामातिसारज्वरघ्नम् ।
मुस्ताशृङ्गीविषाणां प्रशमयति रजः सेवितं क्षौद्रयुक्तं
बालानां वान्ति कासज्वरमर्तिविषजं क्षौद्रयुक्तं रजो वा॥४६॥
कुमारातिसारे कषायः समङ्गामदाशारिवारोध्रजः क्षौद्रयुक्तः ।
मदारोध्रविल्वाब्दमञ्जिष्ठवालाकषायोऽवलेहोऽथवा क्षौद्रयुक्तः ॥४७॥
कृष्णारुणामुस्तकशृङ्गिकाणां तुल्येन चूर्णेन समाक्षिकेण ।
ज्वरातिसारः प्रशमः प्रयाति सश्वासकासः सर्वामः शिशूनाम्॥४८॥

इति श्रीमद्दिवाकरपण्डितकुलालङ्कारलोलिम्वराजविरचिते
वैद्यजीवने तृतीयो विलासः समाप्तः ।

—०—

## चतुर्थो विलासः

विद्वल्ललामलोलिम्व-नृपतेर्वाग्विलासतः ।
तृप्तिर्नजायते स्वामिन् ! पुनः किञ्चिन्निरूपय ॥ १ ॥
क्षयोत्पत्तिविनाशाय सिंहास्यः सेव्यतां सदा ।
बहूनामस्य विश्वासो जातः कमललोचने ! ॥ २ ॥
वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ३ ॥
अयि सुन्दरि ! सुन्दरानने ! रुचिरापाङ्गतरङ्गलोचने ! ।
नवनीतमधूपलाशनादुडुराजोऽपि भवेत् क्षयक्षयः ॥ ४ ॥
अयि कोमलकुन्तलावलीविलसत्पल्लवमल्लिकाभरे ! ।
त्रिफलाजनितः कषायकः सहितो गुग्गुलुना व्रणं जयेत् ॥ ५ ॥
मदनज्वरकारिनामधेये ! रसिके ! रत्नकले ! प्रभातकाले ।
शिशिराम्बु पिबन्मधुप्रयुक्तं गणनाथोऽपि भवेत् किलास्थिशेषः ॥ ६ ॥
त्रिकटुत्रिफलाकलिङ्गनिम्बत्रिवृदुग्राखदिरोद्भवः कषायः ।
पशुमूत्रसमन्वितो निपीतः क्रिमिकोटीरपि हन्ति वेगतोऽप्यम् ॥७॥
जातीप्रवालत्रिफलायवासदार्वीत्रियामामृतगोस्तनीनाम् ।
कफायकः क्षौद्रयुतो निहन्ति मुखस्य पाकं मुखपङ्कजस्थम्॥ ८ ॥

भूनिम्बनिम्बत्रिफलापटोली-वासाऽमृतापर्पटभृङ्गराजैः ।
क्वाथो हरेत् क्षौद्रयुतोऽम्लपित्तं चित्तं यथा वारवधूविलासः ॥ ९ ॥
स्फुरत्सुन्दरोदारमन्दारदामप्रकाभिरामस्तनद्वन्द्वरम्ये ।
हरिद्रारजोमाक्षिकाभ्यां विमिश्रः शिवायाः कषायः प्रमेहापहारी ॥ १० ॥
पउमवण्णमणोज्जविलोअणे सइसिसहामणमोहणजोवणे ।
जयइ मेहगणं अमुआरसो महुजुओघ हरीहरिणं प्रिये ॥ प्राकृते ॥
छाया–पद्मवर्णमनोज्ञविलोचने शशिसिद्धमनमोहनयौवने ।
जयति मेहगणम् अमृतारसो मधुयुतइव हरिर्हरिणं प्रिये ॥ ११ ॥
समधुश्छिन्नास्वरसो नानामेहनिवारणः ।
वदन्ति भिषजः सर्वे शरदिन्दुनिभानने ! ॥ १२ ॥
रतिकेलिकलाकुशले ! विलसद्वलये ! मलयेन समानकुचे ! ।
अमृताव्रततीरुवुतैलवती दलयेदनिलाऽस्रमुदारतरम् ॥ १३ ॥
मधूकारुणागोपिकादेवधूपैः शृतं वातरक्तापहं पिण्डतैलम् ।
कषायः सहैरण्डतैलेन पीतस्तथैरण्डसिंहास्यवत्सादनीनाम् ॥१४॥
लशुनजीरकसैन्धवगन्धकत्रिकटुरामठचूर्णमिदं समम् ।
सपदि निम्बुरसेन विषूचिकां हरति भोरतिभोगविचक्षणे ॥ १५ ॥
रुग्लाजाब्जवटप्ररोहमधुकैर्मध्वन्वितैः कल्पिता
उग्रामाशुतृषां भृशं प्रशमयेदास्यान्तरस्था वटी ।
ऐलालाजलवङ्गनागचपलास्त्रीकोलमज्जाम्बुद-
श्रीखण्डं मधुखण्डयुक्प्रशमयेद् वान्ति त्रिदोषोद्भवाम् ॥ १६ ॥
रमारम्याकारे ! चतुरवचने ! चारुचिकुरे !
विमूल्याऽलङ्कारे करतललसन्नीलनलिने ! ।
निदाघः सञ्जातस्तव किमु सरोजन्मकदली-
दलैः क्लृप्ते तल्पे स्वपिहि लघु साहित्यनिपुणे ! ॥ १७ ॥
रसद्विजीरद्विनिशामरीचसिन्दूरदैत्येन्द्रमनःशिलानाम् ।
चूर्णीकृतानां घृतमिश्रितानां त्रिभिः प्रलेपैरपयाति पामा ॥ १८ ॥
नखमुखलालनसुखदा पामा रामा नितम्बविस्तारा ।
स्नेहकनकरसगन्धैर्गच्छति पूर्वा परा वशं याति ॥ १९ ॥
मदनसैन्धवगुग्गुलुगैरिकाज्यमधुबालकपङ्कविलेपनात् ।
स्फुटितमप्यखिलं चरणद्वयं विकचतामरसप्रतिमं भवेत् ॥ २० ॥
पथ्यातिलाऽरुष्करकैः समांशैर्गुडेन युक्तैः खलु मोदकः स्यात् ।
दुर्नामपाण्डुज्वरकुष्ठकासश्वासं जयेत् प्लीहरुजश्च तद्वत् ॥ २१ ॥
भल्लातकासीसहुताशदन्तीमूलैर्गुडस्नुग्रविदुग्धदिग्धैः ।
लेपोचितैर्गच्छति गण्डमाला समीरवेगादिव मेघमाला ॥ २२ ॥

गोमूत्रेण कृतः कलिङ्गकटुका पाठावृषाब्दामर-
क्वाथः क्षौद्रयुतो निहन्ति सकलान् कण्ठामयानुत्कटान् ।
पाठातेजवतीरसाञ्जनयवक्षारोपकुल्यानिशा-
देवानां मधुना कृता मुखधृता तद्वद्वटी वर्तते ॥ २३ ॥
प्राणेश्वर ! प्रियतमे ! वद किं वदामि ?
तत्कान्त ! तत् किमु मृगाक्षि ! यदग्निकारि ।
सम्यक् शृणु प्रणयिनि ! प्रणयिन् शृणोमि
खादेत् सनिम्बुरससैन्धवशृङ्गवेरम् ॥ २४ ॥
हिङ्गुक्षारद्वयसैन्धवसौवर्चलविडपिप्पलीग्रन्थिक-
चित्रकचव्यमरिचकुस्तुम्बरीवर्वरीतिन्तिडीषड्ग्रन्था-
ऽजमोदाऽम्लवेतसपुष्करमूलनागरकरञ्जजीरकहरी-
तकीवृकीवपुषाभिः विरचितं चूर्णमिदमश्मरीहृदय-
गलरोगविबन्धाध्मानहिक्कावर्ध्मगुदजगुल्म-
सकलशूलप्लीहपाण्डुश्वसनकसनदहनसदनवदन-
विरसताविरतये समर्थतरम् ॥ २५ ॥ दण्डकम् ॥
हिङ्गुव्योषाजमोदाद्विजरणलवणं प्राग्भजेत्साज्यभुक्तं
कुर्याज्जाज्वल्यमानं ज्वलनमनिलजं गुल्ममेतन्निहन्ति ।
वृक्षाम्लाम्लाग्निपथ्या त्रिकटुपटुविडं जन्तुजिज्जीरयुग्मं
दीप्यौसौवर्चलश्चाऽचलमपि सकलं भस्मसाच्चर्करीति ॥२६॥
शुण्ठी बाणमिता कणाऽर्णवमिता दीप्यायवान्योः क्रमाद्
भागानां त्रितयं द्वयश्च लवणाद्भागः शिवैतत्समा ।
कोष्ठाऽऽटोपरुगामगुल्ममलहृल्लोलिम्वराजोदित-
श्चूर्णोद्रीनपि भस्मसात्प्रकुरुते किम्भोजनं भोजनाः ॥ २७ ॥
जिह्वाकण्ठहृदां विशोधनकरं वैस्वर्यशोफापहं
ग्राहिश्वासबलासकासचलजिद् वृष्यं कटूष्णं लघु ।
पाके स्वादु विबन्धनुद् रुचिकरं क्षुद्बोधनं भोजने
भोक्तव्यं सह सैन्धवेन सततं निम्बूद्रवैरार्द्रकम् ॥ २८ ॥
शिग्रुदीप्यवरुणद्वियामिनी कुञ्जराशनकृतः कषायकः ।
बोलचूर्णसहितोऽन्तरस्थितं विद्रधिं प्रशमयेदसंशयम् ॥ २९ ॥
कमलकुड्मलकल्पपयोधरद्वयसमाहितहारमनोहरे ।
हृदयरुक्षु हितं घृतमर्जुनस्वरसकल्कसुसाधितमङ्गने ॥ ३० ॥
सोऽयं सुगन्धिमुकुलो बकुलो बिभाति
वृक्षाऽग्रणीः प्रियतमे मदनैकबन्धुः ।

यस्य त्वचैव चिरचर्वितया नितान्तं
दन्ता भवन्ति चपला अपि वज्रतुल्याः ॥ ३१ ॥
प्राणनाथ ! तरुः कोऽयं ? बकुलः केलिलालसे ! ।
अस्य त्वक्चर्वणात् किं स्याद् ? दन्तदार्ढ्यं सुमध्यमे ! ॥ ३२ ॥
द्राक्षापथ्याकृतः क्वाथः शर्करामधुमिश्रितः ।
श्वासकासहरो देयो रक्तपित्तप्रशान्तये ॥ ३३ ॥
कोऽन्यः प्रयोगो विनिहन्ति हिक्कां बैभीतकं चूर्णमिव प्रसह्य ।
मयूरपिच्छस्य च भस्म सद्यो मधु प्रयुक्तं विनिहन्ति हिक्काम् ॥ ३४ ॥
भिन्दन्ति के कुञ्जरकर्णपालिं किमव्ययं वक्ति रते नवोढा ।
सम्बोधनं नुः किमु रक्तपित्तं निहन्ति वामोरु ! वद त्वमेव ॥ ३५ ॥
विश्वा कणा शिवा चूर्णः ससितः समधुः स्मृतः ।
नस्यवद् विश्वगुडयोर्हिक्काधिक्कारकारकः ॥ ३६ ॥
दुरालभाकषायस्य घृतयुक्तस्य सेवनात् ।
भ्रमः शाम्यति गोविन्दचरणस्मरणादिव ॥ ३७ ॥
दुरालभाकषायोऽपि कान्ताया मुखदर्शनम् ।
पश्य कौतूहलं कान्ते ! उभौ विभ्रमहारिणौ ॥ ३८ ॥
अयि रत्नकले ! कुरु मा कलहं कलहंसकलत्रसलीलगते ! ।
शृणुमद्वचनं वद वैद्यमणे! मदिरा मदिराक्षि! शुचं शमयेत् ॥ ३९ ॥
पुनर्नवानागरदारुपथ्या भल्लातकच्छिन्नरुहाकषायः ।
दशाङ्घ्रिमिश्रः परिपेय ऊरुस्तम्भेऽथवा मूत्रपुरप्रयोगः ॥ ४० ॥
सक्षौद्रं कुशकाशगोक्षुरशिवाशम्याकपाषाणभिद्-
दुःस्पर्शं परिसेवितं परिहरेत् सद्योऽश्मरीं दुस्तराम् ।
ऐलापर्वतभिच्छिलाजतुकणाचूर्णं गुणेनान्वितं
यद्वा तण्डुलधावनोदकयुतं स्यान्मूत्रकृच्छ्रापहम् ॥ ४१ ॥
वासैलामधुकाश्मभेदचपला कौन्तीक्षुरैरण्डजः
क्वाथः साश्मजतुर्जयत्यतितरां कृच्छ्राश्मरीः शर्कराः ।
कृच्छ्रे दाहरुजाविबन्धसहिते क्वाथोऽश्मभिद्गोक्षुरा-
ऽनन्ताऽऽरग्वधचेतकी विरचितो मध्वन्वितः शस्यते ॥ ४२ ॥
न्यग्रोधाऽङ्कुरकुष्ठरोध्रविकसा श्यामा मसूराऽरुण-
श्रीखण्डैः पयसान्वितैर्विरचितं व्यङ्गघ्नमुद्वर्तनम् ।
लिप्तं सप्तदिनं मसूररजसा सर्पिः पयः श्यामता-
वक्त्रं शारदचन्द्रसुन्दरतरं व्यङ्गस्य व्यङ्गाद् भवेत् ॥ ४३ ॥

इङ्गुद्याः फलमज्जको जलयुतो लेपो मुखे कान्तिदो-
　　लोधोग्राधनिकं निहन्ति पिटकाँस्तारुण्यजाँल्लेपनात् ।
हार्यं रक्तमरुंषिकारुजि हितो मूत्रेण लेपोऽथवा
　　पिण्याकस्य नवेतरस्य शकृतः पादायुधस्य ध्रुवम् ॥ ४३ ॥
तैलं शोफमपारमप्यपहरेद्वृश्चीररास्नामहा-
　　भैषज्यामरशुष्कमूलकयुतं विम्बीरसे साधितम् ।
तद्वद् विश्वकिराततिक्तमथवा पाठानिशाधावनी
　　मुस्ताजीरकपञ्चकोलजरजः सम्मिश्रमुष्णाम्वुना ॥ ४४ ॥
नित्यमत्ति पवनं वने वने तस्य वोधकपदं भवेत् किमु ।
वीजमप्यसितवर्त्मनः प्रिये ! किं भवेत् ? सपदि तद्वदस्व मे ॥ ४५ ॥
कस्य नस्य विधिना कफोद्भवा वेदनाः शिरसि संस्थिता द्रुतम्।
यान्ति नाशमवले ! मनोहरं तद्वदस्व कमलायतेक्षणे ॥ ४६ ॥
कान्ते ! कुंकुमनस्यतोऽपि सकलाः पीडाः शिरोजाः क्षणा-
　　न्नाशं यान्ति शृणुष्व तस्य सकला युक्तीर्मदीयाऽऽस्यतः ।
आदौ कुंकुममाज्यतः परिकृतं दुग्धेन पिष्टं ततः
　　पश्चाच्छर्करयायुतं प्रियतमे ! नस्यं भवेत् कौंकुमम् ॥४७॥
उग्रापाठापटोलौषधरुवुकजटाशिग्रुदद्रुघ्नकुष्ठै-
　　र्धान्याम्लेन प्रपिष्टैः प्रशमयति महामूर्धरोगानशेषान् ।
पक्वं पत्रं घृताक्तं रविभवमनले तापितं पीडितं तत्
　　तोयं कर्णे च सिक्तं दलयति सकलं कर्णशूलं समूलम् ॥ ४८ ॥
घृततीक्ष्णयुतः सुरसास्वरसो लघुराजमृगाङ्क इति प्रथितः ।
अपहन्त्यनिलान्सवलान्वहुलान्निजभक्तरिपूनिव चक्रधरः ॥ ४९ ॥
चूर्णाः कषाया गुटिका घृतानि तैलानि भागेन च योजितानि ।
विलासिनां वातविनाशनाय विलासिनीनां परिरम्भणानि ॥ ५० ॥
अमृतममृतजं सितासमेतं गुणवति ! पित्तमपाकरोति सद्यः ।
तरुण इव नितम्विनीनितम्वाम्वरमतनुज्वरजर्जरीकृताङ्गः ॥ ५१ ॥
माणं सिणीलो अणचंदलच्छी थूलत्थणी श्रोणितटाभिलामे ।
मुखप्रभार्निर्जितचन्द्रलक्ष्मि ! घनस्तनश्नोणितटाभिरामे ।
कफप्रकोपप्रशमाय योग्यो योगो यथाऽयं न तथाऽन्ययोगः ॥ ५२ ॥
　　कफाद्भवति भो भीरु ! च्छिन्नाक्वाथो मयूदरः ।
　　अस्याऽर्थो लभ्यते नैव तन्वङ्गि ! तव मध्यवत् ॥ ५४ ॥

इति श्रीमद्दिवाकरपण्डितकुलालङ्कार-लोलिम्वराजविरचिते वैद्यजीवने राजयक्ष्मादिरोगाधिकारो नाम चतुर्थो विलासः ॥

## पञ्चमो-विलासः

ताम्बूलं मधुकुसुमस्रजो विचित्राः, कान्तारं सुरतरुनवा विलासवत्यः।
गीतानि श्रवणहराणि मिष्टमन्नं, क्लीबानामपि जनयन्ति पञ्चबाणम्॥१॥
सहितं घृतेन मधुना मधुकं, परिसेवितं पिबति योऽनु पयः।
नवसुभ्रुवां सुखकरः स पुमान् बहुवीर्यपूरपरिपूर्णतनुः॥२॥
मधुयष्टिकणातुगावरावरचूर्णं सितया समन्वितम्।
वलितं पलितं विनाशयेन् मतिवीर्यायुरकार्श्यकारणम्॥३॥
अमृतामलकत्रिकण्टकानां हविषा शर्करया निषेवणेन।
अजरा अमरा अपारवीर्या अलकेशा अदितेः सुता बभूवुः॥४॥
उच्चटामर्कटीगोक्षुरैश्चूर्णितैः शर्करादुग्धसंमिश्रितैः पाचितैः।
सेवितैर्वार्धके मानवो मानिनीमानमुच्छेदयेत् किं पुनर्यौवने॥५॥
भुक्त्वोच्चटां क्षीरयुतां विलासी भुङ्क्ते शतं सुन्दरि! सुन्दरीणम्।
त्वं तावदेकासि मया तु साद्य भुक्ता रतौ पश्य कुतूहलं मे।॥६॥
चूर्णो धृतक्षौद्रयुतो रसैः स्वैर्विभाविताया बहुधा विदार्याः।
निषेव्यमाणोऽनुदिनं विलासी दशाङ्गनाभिः सह रंरमीति॥७॥
सहितं घृतदुग्धाभ्यां विदारिप्रभवं रजः।
उदुम्बरमितं भुक्त्वा वृद्धोऽपि तरुणायते॥८॥
सौभाग्य-पुष्टि-बल-शुक्रविवर्धनानि किं सन्ति नो भुवि बहूनि रसायनानि।
कन्दर्पवर्धिनि परन्तु सितयाज्ययुक्ताद् दुग्धादृते न मम कोऽपि मतः प्रयोगः॥
अधुना ब्रूमहे सद्यश्चमत्कारकरान् रसान्।
यतो न नीरसा भाति कविता कुलकामिनी॥१०॥
पथ्याकणार्कविषतिन्दुकदन्तिबीजतिक्तात्रिवृद्रसबलीन्सदृशान्विमर्द्य।
धूर्ताम्बुना सकलवासरमेष सूतः स्याद्विश्वतापहरणोऽभिनवज्वरघ्नः॥११॥
वल्लयुग्मं भजेदस्य शृङ्गवेररसान्वितम्।
मुद्गयूषान्वितो भक्तो भोजनाय प्रशस्यते॥१२॥
शुल्वं टङ्कणगन्धकौ च गरलं तुत्थं रसं खर्परं
तालं तुल्यमिदं विमर्द्य घटिकामात्रं सुषेव्यारसैः।
सूतः स्यात् त्रिपुरारिणा विरचितः शीतारिरित्थं स्मृतो-
ऽजाजीशर्करया युतः प्रशमयेदेकाहिकादिज्वरम्॥१३॥
मरीचबलिहिङ्गुलैर्गरलपिप्पलीटङ्कणैः
सुवर्णभवबीजकैःसमलवैर्दिनार्धावधि।
जयास्वरसमर्दितैःकनकसुन्दरःसुन्दरि
स्मृतो ग्रहणिकाज्वरातिसृतिवह्निमान्द्यापहः॥१४॥

लोहाभ्राऽर्करसं समं द्विगुणितं गन्धं पचेत्कोलिका-
काष्ठाग्नौ मृदुले निधाय सकलं लोहस्य पात्रे भिषक् ।
सर्वं गोमयमण्डले विनिहते रम्भादले विन्यसेत्
तस्योर्ध्वं कदलीदलं द्रुततरं वैद्येश्वरो निक्षिपेत् ॥ १५ ॥
स्यात्पञ्चामृतपर्पटीग्रहणिकायक्ष्मातिसारज्वर-
स्त्रीरुक्पाण्डुगराम्लपित्तगुदजक्षुन्मान्द्यविध्वंसिनी ।
रम्ये ! चञ्चललोचने मम मनस्तोषाय बद्धादरे
योज्या जाठररोगसङ्घदलने सैषा विशेषादरात् ॥ १६ ॥
ग्रहण्यामनुपानञ्च हिङ्गुसैन्धवजीरकम् ।
जीरकं पाण्डुगरयोरितरेषु स्वयुक्तितः ॥ १७ ॥
वचाविश्वाजीरोषणगरलवाल्हीकदहन-
त्वचां कार्या वट्यश्चणकतुलितामार्कवरसैः ।
यथा भानोर्भासस्तिमिरनिकरं यामिनि भवं
हरन्त्येताःशूलान्यनिलमनलग्लानिमपि च ॥ १८ ॥
समानभागे बलिशूलबीजे तयोः समानं कनकस्य बीजम् ।
धत्तूरतैलेन विमर्द्य सम्यग् विलासिनीवल्लभनामधेयः ॥ १९ ॥
सूतो भवेद् वल्लयुगप्रमाणः सितायुतो मेहसमूहहारी ।
वीर्यस्य बन्धं कुरुते नराणां निहन्ति दर्पंच सुलोचनानाम् ॥ २० ॥
शूले हिङ्गुघृतान्वितं मधुयुता कृष्णा पुराणज्वरे
वाते साज्यरसोनकः श्वसनके क्षौद्रान्वितं त्र्यूषणम् ।
शीते व्याललतादलं समरिचं मेहे वरा सोपला
दोषाणां त्रितयेऽनुपानमुचितं सक्षौद्रमार्द्रोदकम् ॥ २१ ॥
घनपर्पटकं ज्वरे ग्रहण्यां मथितं हेम गरे वमीषु लाजाः ।
कुटजोऽतिसृतौ वृषोऽस्रपित्ते गुदकीलेष्वनलः कृमौ कृमिघ्नः॥ २२ ॥
नारायणं भजत रे जठरेण युक्ता नारायणं भजत रे पवनेन युक्ताः ।
नारायणं भजत रे भवभीतियुक्ता नारायणात् परतरं नहि किञ्चिदस्ति ॥
आयुर्वेदवचो विचारसमये धन्वन्तरिः केवलं
सीमागानविदां दिवाकरसुधाम्भोधित्रियामापतिः ।
उत्तंसः कवितावतां मतिमतां भूभृत्सभाभूषणं
कान्तोक्त्याऽकृत वैद्यजीवनमिदं लोलिम्बराजः कविः ॥ २४ ॥

इति श्रीमद्दिवाकरपण्डितकुलालङ्कारलोलिम्बराजविरचिते
वैद्यजीवने पञ्चमो विलासः ।

# वैद्यक-काव्यम्

जम्बुद्वीपामाजिविख्यातवैद्य श्रीलोलिम्बराज सुकविनामधेय।
बहूनि या श्रीभवानिप्रसादे दुःखारिहा ग्रन्थ केला विनोदे ॥ १ ॥
अरुचिका कामलपाण्डुरोगे हृद्रोगकासक्षयमग्निमान्द्य।
जीर्णज्वरश्वास असेलकोणही, घेंपी पलीसिगुलहेचि दोन्ही ॥ २ ॥
श्लेष्मज्वरश्वास विबन्धपाहा क्षयादिकांसीमधुपीपलीगा।
अनेक दोषावखिर्धमानाः गोदुग्धपक्वाचढऊनिद्भूण्या ॥ ३ ॥
हरीतकी धेनुसतीतरीही किं शुण्ठिसीतीक्ष्ण गलासवेंही।
वी वां दुधेंशि अथवा गुलेशी सिता घृतेशिक्षीणवीर्यदोषी ॥ ४ ॥
वीर्यासि कांदे रसदे मधेशिकां आवल्याचारसदे मधेशि।
धृतामधेशि धृतआसवदं धेणेकरूनी बहुवीर्यबंध ॥ ५ ॥
चालिश्रमेत्या गुड आणि जीरे नुसत्याविंयाशीं चतुयान्तमीरे।
शूली दिजे हींग हिराघृतेशि आले रसेसी जवरवारकासी ॥ ६ ॥
अजीर्णविष्टम्भ असेलजेह्वां धेगन्धवीडा समनेत वो वां।
कृष्णातिलेशी बहुमूत्रदोषी दे शर्करेशी प्रमदा विशेषी ॥ ७ ॥
नलादिकीं देकटुकीहरीतकी तैलाचमध्ये कपिलानिशोत्रकिम्।
गोमूत्र साहात्मक युक्तशेविजे सर्वांजनासि सितपैत्यदीजे ॥ ८ ॥
निम्बूसमुद्रफलपुष्करमूलशुण्ठी येकत्र उष्णकरिकर्दमदेललाटिम्।
वे खण्डकोष्ठमुरकाभरिकेशेसन्धी आणूनि पीपलदलेवरि घालिटोपी ॥ ९ ॥
नाका वाटें रक्तवाहे खलालि आम्राटोलियां टरिते हराली।
येगे नासे राहां ते रक्तयेतां पोटां मध्ये दे मधेशि अलीता ॥ १० ॥
गैरिकासहितसैंधववाला मेणगुग्गुलुघृते करिकाला।
लेपि पाय फुटले तरि पाही होति पत्रनलिनी प्रतिमाही ॥ ११ ॥
दारुहरिद्रा मनशीलध्यातें अनुक्रमेहीं जवखार सैन्धव।
हे चूर्णध्यावें सहितानु पांसवे हे कण्ठरोगासि निवारिलक्रमे ॥ १२ ॥

---

वैदर्भमाजिज्याचे जुननगरमुदक् पुण्यपूरें निवासें,
आपाजी नागनाथात्मज कविनृपसत्प्रौढगोविन्दराजे।
श्रेष्ठासानाकवीतेस्तउनिम्हणतसेद्या अनुज्ञा विनोदे,
दुःखारी ग्रन्थआताशतभरिरचित श्रीगणेशप्रसादे ॥

आले च कांकोलिचकामुलाही काकांगका बोलसन क्रमेही ।
हे घालि कानि रस उष्णा कान्ते कां नातऊगालुनितीडिकाले ॥ १३ ॥
वे खण्डशुण्ठिमगवसैन्धवदेवदारुहीराहिहिंग समभागकरूनिसार ।
पाचूनितेलतिलउष्णचिघालिकाविपूआणिथोरतिउकाकरिदूरिजानि॥ १४ ॥

धोत्राग्निगुडसैन्धवा सिरसहि एरण्डियागर्भिकी
यांचा लेपकिजे क्रमेगुणकरी यानन्तरे आगरवीम् ।
ध्यावे गर्दभमूत्रतक्रसमहिश्वानास्थिऊगालणे
याचा लेपभगन्दरासिकरणे लोलिम्बराजा भणे ॥ १५ ॥

घेंपीपली चोखटवाविडंगे धेत्री फला चूर्ण मधासवेगे ।
कुष्ठ प्रमेह क्रिमिपाण्डुकेशिशिरादलि आणि भगेंदराशी ॥ १६ ॥
रस श्वेत कणे राचा विडंगे त्रिफला क्रमे ।
या मधे पचित्या तेलें सर्वा कुष्ठासलेपने ॥ १७ ॥

मषी मयूर पिच्छाची उष्णोदकेचि सेविजे ।
एकाही सहनका मध्ये हिक्का शमन जाणिजे ॥ १८ ॥
उष्णोदकेसि अतिवीष भागिकां व्याहाडे साखर शुंठिभागि ।
कांपीपलो शुंठि मधासवेंहीश्वासादि हिक्का प्रतियोगतीन्हीं ॥ १९ ॥
श्वासी गुलेशिशिर सेल घावे श्वासादि हिक्का प्रति आयकायें ।
कासो घा चारस एक योगा का सेंगवा पत्ररस प्रसिद्धय ॥२०॥
बलाक्रमे सैन्धव बोरिपत्रें घृतासवें सप्तक एक मात्रें ।
स्वरोपघाती श्वसनादि कान्ते लोलिम्बराजा कवि सांगतीते ॥ २१ ॥

श्रीखण्डआमलकटीमधुमाक्षिकांचिविष्टादिजेसहितमिश्रितयोगहाही ।
कांहींगकाउलिमुलितिनयोगजालेलोलिम्बराजकविसांगतिवांतिनाही ॥२२॥
निद्रा न येल अथवा उलुकक्रमेहि जे वांति शेषहि प्रपाक असेल कांहि ।
साहेल जायफलते तितुके चिघावें लोलिम्बराज म्हणताति बहून घावें ॥२३॥
द्राक्षे घणेक विठसार मधुक्रमेगा दांडिवसार मग साखर औषधेंगा ।
भदे करूनि बहुमत्तहि त्याशीदेणे उन्माद शीघ्र उतरेलहि ये प्रयत्ने ॥२४॥
घें पीपली सहित कांमुण जाजिवाटी कां क्वाथ शुंठि समभाग मुली शराटी ।
कांशुण्ठि सीगुल समग्रहि योगचारी घे अम्लवात कटिशूल तयासि भारी ॥२५॥
शुण्ठी सुवीचल हींग मिलोनितोला तोला च घे मगजसागर कोटियांचा ।
तू पासवें लशुन कां हिरडे गुलेंशि हे आमवात शुलनाशति गूण याशि ॥२६॥
जो शुण्ठी चा क्वाथ तथा मुपघृत जालोंनि क्वाथ उरेल त्यांत ।
ते श्वास कासि गृहणी ज्वरांगी दे ऊर्ध्वभ्रांति प्लिह पांडु रोगी ॥ २७ ॥

वे खण्ड कोष्ठ शिरतांगुल गुग्गुलेशि निम्बत्वचा जतु मधु घृत हीर उपाशि।
हा धूम भूतिक महाविष मासि घावा अष्टांगधूप परितोचिमि लेनिधावा ॥२८॥
घे सूर्यकांति मगकेशहि मनुषा चे घे गंधका सहिल शूकर वीट चौथे ।
हा धूम सर्व विषमज्वर भूतबाधा श्रीवैद्यराजह्मणतो हरतील बाधा ॥२९॥
कोष्ठा तुपाचे उठणे करावे तें सत्य जानि प्रतिदीन घावें ।
श्वासादिकासिप उसें क्रमेसिदे शीघ्र आले रसहि मधेशी ॥ ३० ॥

बालालागुनि बालवें लवरवे घे चोख्टा पीपली
जीरे शुण्ठिलवंग इन्द्रजवही घे भद्रमुस्ता च ही ।
चोखें जे अतिवीस आठ सकलें हाका प्रमाणे चिधे
गोली निम्बुरसें उगालिसहजें एकादिसा आडधे ॥ ३१ ॥

स शुंठी मुल्या शर्करेसि प्रमेहि दुजे शर्करागोखरूचूर्णतेंही ।
उतारि मूल्यांची त्वचापाकदुग्धी घृताशर्करासी दिजे वीर्यवृद्धि ॥३२॥
सर्व प्रमेही त्रिफला गुलेशीं शोधूनि छिन्ना जल ही मधेशी ।
खत्रितु पेशि पिचुमंदयुक्ते श्री वैद्यराज ह्मणे दुखियातें ॥ ३३ ॥

शिलाजतुमधेशिका क्षौद्रपाषाण भेदकम् ।
तत्काल शमनीयेणे उन्हाले मूत्ररोधनम् ॥ ३४ ॥
चोखीसाकरठांक शेवरिर से हेमूत्रकृच्छ्री दिजे,
तोले सागुल वेलिचा रसमधू अष्टादशाजाणिजे ।
व्यांघावा त्रिफला गुलेशि अथवा दे गोक्षुरे शर्करा,
संराठी ज्वर वार कांश मिदला सर्व प्रमेही वरा ॥ ३५ ॥

सैन्धव त्रिफला कांकड़ीची विजें चूर्णयाचें सम पांचहि वस्तुजें ।
मूत्ररोधासि उष्णोदकेशे विजेलेंडियाउँदिराचातरिले पिजे ॥ ३६ ॥
घे देवदार समठांकली चीमुलेहि अडोलसा सहित सैंधव से उपाही ।
हे लेपिता वृषणवृद्धि हरे त्वदेशी श्रीवैद्यराज ह्मणताति सुजीसनाहि ॥३७॥

अडोलसा मुसलिकन्दभाग दोन्ही समेसाखर शेवि सांग ।
वाढेललिंग बलपुष्टिविवर्धनाय लोलिम्बराजह्मणति अखंडखाय ॥३८॥
घे आसवंदा समवीसमूली शतावरीमूसलिकन्दचारी ।
ही औषधे वांटुनिलेपि लिंगी सातांदि साठोंसर आणिदीर्घ ॥ ३९ ॥
आदित्यवारी मुलआदित्याचे आणूनियांठे विकरी प्रपञ्च ।
त्याचा मधेशि करिलेपलिंगी दूवेलते स्त्रीजरिहोयधिंगी ॥ ४० ॥
वृन्ताकतैलेन उपस्थमध्ये तेणे महासंकट होइ सद्य ।
विलासिनी यासि महाविनोदे करूनि पाहाह्मणताति वैद्य ॥ ४१ ॥

जाबा वुलीच्या पिकल्याचिशेगा त्याचेंचिके कापड़भीज बीगा ।
त्या कापड़े योनि पुशीत जायतिन्हींदिशेलिंगरति नमाय ॥ ४२ ॥
गोमूत्र दारुहल्दी सवेधेकां कारलीचें मुलचूर्ण हिंधे ।
जे योनि बाहेर निघोनिवाटें ते होयनीकी फलवृद्धि सोडे ॥ ४३ ॥
शेलीं दुधेशी उतराणिमूलया उष्णोदकेंशि जवरवार तोला ।
हे योगदोनीं शुलयोनिनाशी पोढातदेणे सकले धृतेशी ॥ ४४ ॥
एरंडपाधे बीस सोलानिबोला निंवी याने वांटिताटीं चितोला ।
योनीमध्ये शूलतो शीघ्रजाय वैद्यामध्ये सत्यलोलिम्बराज ॥ ४५ ॥
श्वेतार्क मूल मञ्जिष्ठ कटुकी नागकेशरम् ।
कुंकुही लेपिजे मध्ये विटाला विटल्यासिता ॥ ४६ ॥

सीमन्तपुष्पे फलसाचि बीजे तुट इजली वाटुमि विटालि सेविजे ।
विटालदोषक धिहानयेल प्रचीतपाहा मगसत्य वोल ॥ ४७ ॥
यंच्या गवेल त्विट पारन्याचे करूनि चूर्ण जल तंडुला चे ।
कांज्योदके शेवि समग्रयाहि विलासिनी गर्भ न संभवे कहिं ॥ ४८ ॥
सूर्योदयी कृष्ण चतुर्दशीदिनि घे कृष्ण धोत्रे मूल वाथ कंटी ।
थोडे मुलीचे धरि चूर्णमल्पहि विलासिनी गर्भन संभवे कहिं ॥ ४९ ॥
ज्येष्ठ मधुसिता क्षौद्रपद्मकें दोदकस्य च ।
गर्भपाते प्रयुञ्जीत नान्यौषधं समाचरेत् ॥ ५० ॥
कोराटीं मूल गोदुग्धकां पद्मकन्द सैन्धव ।
पद्मनालक्रमे दुग्ध सहते गर्भ वाढवी ॥ ५१ ॥

तिले लांत फूले रूई चित लावी अनुमानते टांकती नेकध्यावी ।
स्त्रवेरक्तगुह्येसित्या गर्भिणीचा पड़े निश्चई गर्भ अल्यादिसाचा ॥५२॥
योनीमध्ये मूल इन्द्रावणी चें राखावें का मूल आघाडिया चें ।
कललाविचा कन्द ही चूर्ण तैसे दो चौरात्री थोरही गर्भनाशे ॥ ५३ ॥
विडीयेरंड पत्रा चिलांवते आठ अंगुल ।
अहोरात्रीं धरीं गर्भ पड़ेल निश्चयें वलें ॥ ५४ ॥

योनीं त इन्द्रावणि मूलघालिजे काकांजिये पुष्कर मूल लाविजे ।
माथानिर्वडिगचिकेनि लेपिजे प्रसूति तेणे समई च जाणिते ॥५५॥
घोड्यांचे विट्कांजिये ऊगलुनि वस्त्रेंवरे गालणे,
मध्ये सैन्धव तैल आणि जवही घालूनि या पाजिजे ।
कां ज्येष्ठा मधुशर्करा घृतमधूकां पाणियासी दिजे,
वेलांचे विज आउ बाजरि भरे तो सोइता गर्भ ये ॥ ५६ ॥

महाशंख ऊगालुनि पाणियाशिका जुनेखापरि शिखउया काथहीका ।
खड्या क्वाथ मंजिष्ठ निंबक्रमेहि तिन्हिले पसांगी तले लिंगपाकी ।।५७।।
कापूरको थंवरि चिट्रिबीज या चातल हा तावरि लेप कीजे ।
तो हात हाती घरि धाम जथे घामे जल्या हात भगद्रवे ते ।। ५८ ।।

श्री कुसुम्बाते पाणिया शिगोदं तावांटि सुन्दरी ।
प्रत्यही लेपांणे विटालनये सत्वरी ।। ५९ ।।
तुपासी मुरली पत्रे नागकेशर ही घृती ।
दुधासि भातहि पथ्य पुत्र प्राप्तीसि योग्यता ।। ६० ।।
दुधासवें शेवरीचि फुले हे कांकजिके जासवनि क्रमेहे ।
सेवीं विटालांत तरि प्रतिज्ञा घरीलनावां जतरि प्रतिज्ञा ।। ६१ ।।
हिंगु सैन्धव मडूरिया क्रमे पातिते विषमभाग कांजिये ।
गर्भिचें संमृतलें करुपडें गर्भ होय जंरि आडवीकडे ।। ६२ ।।

आसवंद कोष्ठतिविरी गजपिप्पलीशि लेपस्तनाश करितां दुधयेस्तनाशी ।
काश्वानि चे दुधवरें अथवांति लाही घे सूर्यदूधयसदे रविवारतीन्हीं ।।६३।।
घे शर्करा त्रिकटु रु त्रिफला मिलावे यामाजि तूपमधुहे समभाग घावे ।
हे सेविजे प्रतिदिनि मलनेचिपथ्ये लोलिम्बराज कविसांगति कुष्ठजातें ।।६४।।
गो दुग्ध साख हरी चट धातश्याचा कूष्मांड साखरगुलहि मदहारकाचा ।
घेगुग्गुलु त्रिकटुक त्रिफला विडंग वातादिरोग अथवा ज्वरशैत्यभंग ।।६५।।
विडंगे हिराहींग वे खंड कोष्ठ क्रमे चारि उष्णोदकें शेयि स्पष्ट ।
विसूची अजीर्णी शुली वातगुल्मी गुणप्राप्ति हृद्रोग जाति क्रमे ही ।।६६।।
वे खंड हिंगुजवखार जमोदयांवे घे यांचवे अम्लवेतस ही रहे डे ।
त्यामाजि सैंधवदिजे मगसातजाली हेचूर्णउष्णउदकीगुणथोरगुल्मी ।।६७।।
दन्ती फले गुलजुना जवखारगेल घे पिंपली मगडुधा तिलबीज गोले ।
टाकप्रमाणगुटिकानिवडीकचीकेंत्रीं रात्रि शेवितंतिन्हीक्षयवातहिक्के ।।६८।।

तक्रयुक्त बिजही पल सांचें पाजितांडु खहरे क्रिमियाचें ।
हिंगये कडुसरा अजमोदा दोनियोग तुजसांगति वैद्य ।। ६९ ।।
वे खंड आणि लशुना समवेतराया अत्यन्त शुद्धहिरडे दल पिप्पली या ।
याचे नि अंजन किजे जरिहोयरोगीचातुर्थिकाहिंविषमज्वरजातिवेगी ।।७०।।

देवदार गुलवेरिंगिणी डोरली हलदि शुंठि शाहवी ।
घे घणे कढवि सातवें दिशी वातपित्तकफदें ज्वर याशी ।। ७१ ।।
श्लोक येक परितीन पांचने हे ज्वरां सकलिका पाजणे ।
सर्व शुंठि घनवालके घणे निम्बसालि असता न विचारणे ।। ७२ ।।

वातज्वरी क्वाथ किराइताचा पित्तज्वरीदे पितपापड़ पाचा ।
आडोल सा श्लेष्मज पीपलीशी काढा क्रमेहा वृहती मुलेशी ।। ७३ ।।
अडोल साथे कुटुकी गुडूची हा वातरक्तीं वरवा सदाची ।
वांती नित्य नुसती च बेल करूनि काढा मधुयुक्त देण ।। ७४ ।।
धणे शुंठि वे खण्ड मीरे हरिद्रा जवानिक्रमेहे समेटाक वारा ।
चतुर्थं दिनि पांचने श्रेष्ठ जेहे महावातयुक्त ज्वरी शीघ्र देहे ।। ७५ ।।
जाला हाना दश मुलांतिल पांचमूल्या सेनोपडोली गुलवेलि किरातवाला ।
घे भद्रमुस्त कुटुकी समयंक वारा वातज्वरी जन असेलत यासकाढा ।।७६।।
अडोल सा शुण्ठि धणें गुडूची निंव त्वचा क्वाथ करी त्वरेची।
क्वाथा तजूना गुलर्वाल कांहि पित्तज्वरी पाचन सांगतोहि ।। ७७ ।।
पित्तयुक्त असली ज्वर गाढ़ा दाह ताप विनिवारण काढ़ा ।
स्वल्प आणि बहुगूण वापुड़ा मेकला कढवि पित्तपापड़ा ।। ७८ ।।
पित्तज्वरीं अडलसांचि राइते दारुहरिद्रा गुलवेलि जाणते ।
घे रिंगणी सोनपडोलिडोरलीवराकचोरानीवसालिपिप्पली ।। ७९ ।।
सोनें पटोलि कटुकी कचोरा आडोलसाथे त्रिफला वहूवरा ।
श्लेष्मज्वरी घे गुलबेलनीकी क्वाथेमधूचाप्रतिपाकघालिकी ।। ८० ।।
श्लेष्मज्वरी सडोल साचियेकला दोयियंलीचा प्रति पाक वोलिला ।
कां क्वाथ दीजे अवघ्याच पींपली हे दोन काढे वदले कफज्वरी ।।८१।।
किराततिफलारास्नां काहि सा वरिचि त्वचा ।
वातपित्तज्वरामध्ये घावे पाचन शीघ्रहे ।। ८२ ।।
भद्रमोथापित्तपापडा दुजे शुण्ठि आणि गुलवेल जाणिजे ।
पांच वानुतन आडलसाही वातपित्त आहव ज्वर नाहीं ।। ८३ ।।
द्राक्षें किरात कटुकी गुडूचीं अडोल सासोन पडोल भारी ।
मेघोत्तरा भाजन बीज इन्द्र श्लेष्मादिपित्तज्वर जाति शीघ्र ।।८४।।
सोनपडोली गुलवेलपिप्पली पाहाडरातां जनपीलुचीमुली ।
क्वाथांत दोजें कटुकी च सातवी श्लेष्मादिपित्तज्वरदाहनीवत्री ।।८५।।
पिप्पली सहित सोन पडोली आणि ज्येष्ठ मधु आडल सामुली ।
निंव सालमग पाचवीवरी क्वाथपित्तकफमिश्रितज्वरी ।।८६।।
दीपनि कुष्ठ विष्ठेसि भेदावयां उक्तपित्त क्रमेकढूना सावया ।
श्लेष्मज्वरी क्वाथ हा योजणे औंषधें दोनि सोने पड़ोली धणे ।। ८७ ।।
शेगनूतनहि वाह व्याचिकी भद्रमोष कटुकी हरीतकी ।
यांत पिप्पल मूलहि घेगे श्लेष्मवात हित ज्वर जाणे ।। ८८ ।।

धामासा पितपापडा अतिवरा आडोल सा रिंगणी
बालाशुण्ठि हरीतकी दलबरे मोथा क्रमे आणुनी ।
ध्यावी आरणि चामृतानिचनवी सर्वक्रमे औषधे
शूलाध्मानकफामयापहकरी लोलिम्मराजाभणे ॥ ८९ ॥
तेटुंटांकली बोलपाडली वरीधें शेवरा ःशेवरीं
साजालीमगगोरवरूशिवनहि जे रिंगणी ़डोरली ।
हाकादंशक मूल सर्वहि मुले सर्वज्वरा जाणिजे
शूलश्वासकफज्वरादिपि नहा सो पायलीसी दिजे ॥ ९० ॥
जेधांकुटीनूतन यांच मूले हा क्वाथ पित्तादि कफज्वरान्ते ।
जे भोटिपांचदुसरीनत्रीजे हा क्वाथ वातादिकफज्वरीजे ॥ ९१ ॥
रिंगणीडोरली च्यामुल्या मिश्रिता पाचनक्वाथ रोगी च किं इच्छति ।
सन्निपातज्वर श्लेष्मशूलासने सर्वसा विप्रलोलिम्बराजा भणे ॥९२॥
धामोसा दशमूल जीरकघणे सोनें पडोली क्रमे
मोथापिप्पलि शुद्ध इन्द्रजवहिध्यावाक चोराक्रमे ।
हे घेशी दशऔषधे सकलिके मोठें ज्वराकारणे
लोलाजी ह्मणतानि सत्यवचनें क्वाथक्रिया जाणनें ॥ ९३ ॥
निसोथ इन्द्रावणी मूलवाहवा देवदारु त्रिफला वहूवरा ।
घे कटुकी क्वाथाति ही वरी लोलिंबराजह्मणताति निश्चई ॥ ९४ ॥
निंवत्वचाउ वरसालि शुंठी रक्तांजने पीपलि सालिमोटी ।
गुलबेलताजी कोथं वराशी हा क्वाथ सर्वज्वरदाहनाशी ॥ ९५ ॥

इति लोलिम्बराजकृतं वैद्यक-काव्यं समाप्तम् ।

—*—

# रत्नकला-चरितम्

सरसवचनगुम्फो दातृताकल्पवृक्षो
विजितकविकदम्बो डाकिनीभीतिभेत्ता ।
त्रिदशसदसि वाच्यो रोगिणां रोगहन्ता
जयति धरणिपीठे लाललोलिम्बराजः ॥ १ ॥

श्रीरत्नकलोवाच—

घड़ि घड़ि मज पासी गोष्ठी त्याची करावो
सकलभुवनभित्ती तेवि चित्ती लिहावो ।
वहु वहु उतकण्ठा जो उजाईलि जाणा
क्षणभरि तुम्हि आणा लाललोलिम्वराजः ॥ २ ॥
तल मल विरहाची सर्वथा साहवेना
हृदय फुटत आहे हारही आवरेना ।
सकलतुमि मिलावा साजणी शीघ्र जावो
क्षणभरि विनवावा लाललोलिम्वराजः ॥ ३ ॥
झडकरि उडवावो साजणी कोकिलाहे
शिव शिव मजईचा शब्द काहीं न साहे ।
वहुसमदन वाणी जीउ थाकूल आहे
निचलमन नराहे आणि लोलिम्वराजः ॥ ४ ॥
सदरदौलतताजविवीफती मखदुमा यमुना विजलीमती ।
सर्वहि कूँ सुलतान पठावना तुरत लोलिमराज वुलावना ॥ ५ ॥

सखी उवाच—

विनविती तुज लोलिमराजहीं परिनुठी सिवि चाहनसे सही ।
उठिकिती करिसि जिउ आकुला स्वहित रत्नकले न कले तुला ॥ ६ ॥
विरहविह्वल लोलिमराजहा उठि सुखी करि पुष्प असे महा ।
सकलजाणसि तूं बहुस्याहिणी सिकवणे कवणे तुज साजणी ॥ ७ ॥

श्रीरत्नकला उवाच—

तुमबिन परदेसी मैं भई लाल मोरे
सव दिन निशि राऊ गावती गूण तोरे ।

विरह बहुत व्यापा आवना वेगधारा
पगपरति तुम्हारी लाललोलिम्बराजः ॥ ८ ॥

कोकिला कलकली वनगाजे चूतचम्पकफुलीवनराजे ।
मन्दमन्दमलयानिलवाजे आणशीघ्रसखि लोलिमराजे ॥ ९ ॥
नहि सुती सब रात रही खड़ी जुगबराबर येक हुई घड़ी ।
विरहपीर बढ़ी दिल में बड़ी तुरत लोलिमल्याव सहेलड़ी ॥१०॥
माजा प्राणनये च काय अजुणी ते थे च काराहिला
नेणो आणिककामिनी समुललाकीं कायतो रूसला ।
राहे रत्नकले उगी च करिसी चिन्ता कितीमानसी
आतां येइ लखे वदेशिल तुला लोलम्मराजः कविः ॥ ११ ॥

आतां येती हेचि वोलोनिगेला मिथ्या तेणे शेवटी वोलुकेला ।
नेणो रंगे रहिला कोण काजा येरू आतां लाललोलिम्बराजाः ॥ १२ ॥

लोलिम्बराज उवाच—

त्वमसि मम समग्रं सोइ रें धाइ रेहीं, मजवरि रूससीकां तेऽस्मिदासस्य दासः
दुवसट दिलकातूं दूधरी चाल चालें, कुरु रतिरसभावं लाललोलिम्बराजम्।
वालेसलाम मृदुवाणिविगीर वर्ग तं बोले मानवति हेचि मागोनिनिद्धम् ।
वर्खेजवत्कास्युदजूद बुरा बखाने लोलिम्बराज इति रत्नकलामवादीत्॥१४॥
श्रीरत्न० उ०–फूले साजी कूले उणीं गाय गंगे न कोवां कुवीणा उगी वैं सरंगे।
वियोगानलें सर्व हीं देहभाजे तुम्ही भेटवा लाललोलिम्बराजः ॥ १५॥

वहुदिन परदेशी राहिणे त्यासि जाले
लिखितहि वरिनाहीं साजणी येक आले ।
न च मनिकरिचिंताते शीघ्रयेईल गांचां
सकलनणविसांवां लाललोलिम्बराजः॥ १६ ॥

सखी उ०–चटपट सुटलीते धीर कोठे न राहे
वदनधरुनिहस्तीं ये कली बाट पाहे।
घड़ि घड़ि मजवीजी कूजवालावयाला
उशिरवहुतजाला लाललोलिम्बराजः ॥ १७ ॥

करुनि सकलसाजा दर्पवी रूप पाहे
पति अजुणि न येकी हेति चिन्तातु आहे ।
उपवन घर दारिं क्लेशली येतजातीं
न करि अलसु आतां लाललोलिम्बराजः ॥ १८ ॥

अरि रत्नकला तूं कीं हुयी दूचितीरी,
नहि कुछ हमनासुं वोलती खेलती री।
तुजनु मज मुरासा नित्य आणी नु आहे,
क्षणभरि हि न राहे लाललोलिम्वराजः ॥ १९ ॥

सखि सावधहोय दुःख सांडी उठी शृङ्गार कारोनि भोगआजी।
प्रणिपात करुनि स्या मुरासे तुजजे लोलिम्वराज आणिलासे ॥२०॥
इकड़े तिकड़े विलोक यन्तं तुजसी रत्नकले किलानु वलम्।
करिसि कितीमानचालआता द्रुतलोलिम्वराजर्कविसखीकुरुत्वम् ॥२१॥

रत्नकला उ०–प्रियतम सखिको हे दाखिला आज नाहीं
नुपुसतु मुजगेला नेणवेहे सुकांहीं।
इधर तिधर याचा वेगल्यावो पियारे
खसमहि तु हमारा लाललोलिम्वराजः ॥ २२ ॥
प्रियतम विण कैसें साजणी सांगजीजे
तिल तिल तनु माई सर्वदासर्वदीजे।
विसरु पडत नाहीं आठवे तो चि माये
पल पल जुग जाये आणि लोलिम्वराजः ॥ २३ ॥

विद्युल्लतालवति गर्जति मेघ थोरें सर्वत्र नृत्य करीति मदमत्तमोरें।
क्रीडाकदम्व फुलती सखि चालते थे लोलिम्वराज कविराज निवासजेथे ॥२४॥

सखी०उ०-ज्याची कीर्ति जगत् त्रयी प्रकटली मन्दाकिनी चापरीं
जो येके घटि केतु संभरि वरी पद्ये विनोदे करी।
ज्यालागी कवि पातशाह पदवी विद्वज्जनी दीधली
तो हा रत्नकले तुला विनवितो लोलिम्वराजः कविः ॥ २५ ॥
तव सुतनु गुलामीभूय विद्वल्ललामो
विरचयति सलामं लाललोलिम्वराजः।
नहि तव विदितोऽयं त्वं सहेली गहेली
भवति वहुखलेली ज्याणतीहूं उसेकूं ॥ २६ ॥
गेलादिं सुनये पुनः सुनयने संसार थोजाअसे
अन्याये विणकांडगी चरुशशी लीलाविलोलेक्षणे।
आतां सर्व मिदं क्षमस्व अमले सर्वपराधीअसे
हें वोलो निति लासलाम करिसो लोलिम्वराजः कविः ॥२७॥
श्रीरत्न०दोड़ादोड़लक्ष्मीदेखतीक्यातमासा
दवड़-दवड़आतालाललोलिम्वराजः।

अजिजिबुबुजीमाइक्याचलेगाहमारा
ललनतुम्हतुम्हारावेगल्यावोमनावो ॥ २८ ॥
सखीउ०–गुलामः सलामं विधत्ते तवायं विलोलेक्षणे लाललोलिम्बराजः।
नहीं मानती तूं सहेली गहेली खलेली बड़ा मानती क्यूं इसे तूं ॥ २९ ॥
मोकूं आवत वातवात करते तूं सोगई रातरी
यू तो मानवती भई कछु नहीं मेरा कह्या मानती।
काहे कूं करती उठे करकसा पाँयां पड़े भागती
थारालोलिम्बराज आलि चल तूं हूं लागती पाँव कूँ ॥३०॥
अमल कमल माल से हेन साहे वहु मज मन्मथ पीडितो न राहे।
सकलहि सखिया मिलो न जावो क्षणभरि लोलिम्बराज भेटवावो ॥ ३१ ॥
अपर मदन रूपें गद्यपद्ये च वाले
सकलहि युवती चे नीविवीचित्त डोले।
कवण पुरुष हावो साजणी सञ्जातो
शशधर मुखि हातो लाललोलिम्बराजः ॥ ३२ ॥
धरुन करु सखीचा वल्लभा सेनि धाली
हलुहलु हरिणाक्षी अंगणा माजी आली।
दुरुन उठुनि कंठी लाविली शीघ्रबाला
वहु वहु सखि जाला लाललोलिम्बराजः ॥ ३३ ॥
रत्नक०–गोविन्दा जगदीश्वरा नरहरी बापा जगज्जीवना
हा संसारु पुरे पुरे उव गले सो सू किती यातना।
ऐसे जो करिते विलापु विरहे तो देखिलातत्क्षणं
मो पाहे सहि अंगणी अवचिता लोलिम्बराजःकविः ॥ ३४ ॥
वाह्वा कारण री अरी मखदुमा श्रुँ थुँ नवे साजणी
रागें आणिककामिनी करितुसें लोलिम्बराजः कविः।
ये तो रत्नकला उठी सवकथा त्वं किं वृथा दुःखिता
वेड़े तो कवि पादशाह तुजसी हासं तु होतात दा ॥ ३५ ॥
वीच्याच्या परिवेदना वहुमनी होतातवो साजणी
कांठेना मज आजि एकहि घड़ी सो सुं किती जाचणी।
ऐसे देखवि दुःखतूँ परिकूपी कांही नये पापिणी
ज्या वैद्यास बुलावल्याव घरकूँ लोलिम्बराजः कविः ॥ ३६ ॥
जोंगा लक्ष्मण वाउनी नरसजी वेजालजी खानजी
भाना अर्जुन रामजी कमलजी घोंड़ा गुडाभी उजी।

कान्होजी हरजी विठाभिकुमिगा लल्ली बुठा चांदजी
हे गेले परितो नये च सखिये लोलिम्बराजः कविः ।। ३७ ।।
सखो–गेला पाठक थोर थोर परिते यां च्येनहीं ये दुना
आतां कृष्णभटो जनार्दनभटो वामन् भटो या तुम्हीं ।
ल्यावो रत्नकलासितावघरकुं देगा नहीं तो वजा
तुम्हीनां कुदसा विसाग जगमा लोलिम्बराजः कविः ।। ३८ ।।
दत्वालिङ्गन चुम्बनानि बहुशः फेड़ोनिया सावले
हाति पाधरुनीय लिंगमुसले निक्षिप्य योनौ वले ।
ज्यों ज्यों रत्नकला वहूतविकला व्याकूलितीयेतसे
त्यों त्यों हाणतसेघवावधपके लोलिम्बराजः कविः ।। ३९ ।।
अणि अणि वहुनेटी रावजी घावहाणा
सकलविकलमाझा होत सेजीच जाणा ।
अतितनुभगमाजे तू मचा थोर वोडा
क्षणभरिमजसोडा लाललोलिम्बराजः ।। ४० ।।
तोड़ी दे भटके धवाव फटकं हाणे वले नेटके
तेण्हे चित्रविचित्रशव्द उमटे पल्लंगु खाट्यां तुटे ।
आघाते कटि सूत्र सर्व उतटे नाभीतलं आदते
लेटे लोलिमराज मैथुनकरी नाना विनोदासनी ।। ४१ ।।
जों जों ते गमजाकरी बहुपरी त्यों वोंठ दांती धरी
जों जों आसन चूकवीत बह्मणे त्यों त्यों धिरी वा धिरी ।
ज्यों ज्यों साहव लेतिते करति के त्यों त्यों स्तनातीं धरी
जीणे सार्थक आजि हें मगम्हणे लोलिम्बराजः कविः ।। ४२ ।।
ज्यों ज्यों साहव ले तिजे तव महा आनन्द झालीमनी
आघातां अजिकावदेषुनिकुंडा धैर्यं क्षणाराहिली ।
वर्जीला रति राक्षसूपरितिया तो नायके सर्वथा
झाली रत्नकलासकोपवहुधा लोलिम्मराजासि ते ।। ४३ ।।
क्याहूं वातुजकूँ सितावधवकेकी मारता हे मुझे
ज्याणूँ पीठलगाकुतातुजमुवीभीचाडमेरी नहीं ।
भूवा लोलिम छोड़तू करमुझे क्या लाभ होगा तुझे
होगा मुष्किल जा कहूं मिलती मो सारिखी कामिनी ।। ४४ ।।
आलवाजि वलगा सखि याते लाजवामगह्मणे वहुयाते ।
जाचितोकठिणु हावहुमाते तोडितो अधरु सुन्दर दांते ।। ४५ ।।

झड़कर्रि जुठवावा ते धुनी लोलिमाते कुचयुगल वलेहा मर्दितो माय हाथे।
हृदय उलवुनां यां दाखतुं कामतूं ने सकलमतुनिधाला आणयानिर्दयातें॥

चंवेली गुलवार दौलतमिठी साती नन्हा सेवती
रानी रत्नकलाअरी मखदुमा तुम्हें यहाँ आवणा।
पर्देके नजदीक वेश करसे खीजावि लील्यावणा
मूवालोलिमराजनालनिइसे मारूं वहूं धावता॥ ४७॥

सखी–कचीवचीना जुकराजदारी एता इसे क्याकरते तुम्ही जी।
अजावधी रत्नकलामरेगी वहू हुआ लोलिमराज छोड़ी॥ ४८॥

वूढ़ीया भवतामिलोनुसकला खाशा सकाण्या वह्या
खोजे चाकर वादियां कुटिणिका कोलालकेला वहूं।
श्री लोलिम्ववहूत निर्भयनहीं तो नो सड़ी सर्वथा
वोंवामारुनि तीनि रत्नकलया सन्ताडितो लत्तया॥ ४९॥

ज्यामू वे वजगाव्वे नररमे लोढे जुठे चोरठे
तेरे मू पर थूकणा अधमनूं क्यूं आचता तू वहू।
ऐसी वोल तदोनिच्यारिदिधला लातातया लोलिमा
वोंवा मारित सात पांच पउला सन्मश्चकाव्येतली॥ ५०॥

भक्ते मां वेलसर्वघोत्र सुरते होयी निठेले भले
पर्यंकावरि ठाइचे चिसुटिलें तें थे चिते राहिले।
जोटीलो वतमोकलीं सभवती माजानि वेतूंठले
वूढया धाउनिने धवां अवधिया तो अंगणा आणिला॥५१॥

त्याते देखुनि मूर्च्छितासि अवध्या मीलोनियांबूढ़िया
कोएहीं सपितीय आणिहिलवां घालीति वारातया।
ते ह्यांतो उठिया तया पटपटा पायां पडो लागला
वोले बांचविले तुम्ही अवधिहीं लोलिम्मराजः कविः॥ ५२॥

वस्त्रेदेउनि त्यासि वोलति वुढयां क्रोधूधरा जीजणी
दीठारा अवड़ा विहालु हलुतां खोजी वरूनी करी।
वूढया रत्नकले तुजा शिकविती ऐसे नये वो करूं
मोटे रत्नगमाविले जवलुनी लोलिम्वराजः कविः॥ ५३॥

रूपतो मदनावतार दुसरा भोक्ता तया सारिखा
पृथ्वीमाजि न से दुजा चतुरुवो नाहीं तया अगला।
तूनेनो वहुनीटले पुरुषवो तू जाणसी सर्वही
मोटे रत्नकला विलेखवडल्या लोलिम्मराजः कविः॥ ५४॥

रत्नकला उवाच

क्यारी क्या मुझकूं वहैकिडकत्यां बुस्कून ही बोलत्यां
मूवा लोलिम क्याकहूं उसकितां बातां अमाजी तुजे।
केतारी कहणातुजे जुनरमें क्या मेखमारी तुम्हें
राहेच्यूथइता लला खलडवा ज्यों रातकूं तोडती ॥ ५५ ॥
शिकवुनि बहुतीले बोलती बूढ़िया त्या
झड़करि सखिये तू पाठयासीति आणूं।
सकलधरणिमध्ये याहता दोस्त ऐसा
पुनरपि निमिले हो लोलिमासारि खावौ ॥ ५६ ॥

बूढीउ०-बन्दो ह्यां सबमीलमील गधड्यां छोरी अवारा किती
मेरा बोल नहीं इलात करती अम्मा मई क्या करूं।
आरी दौलत सेवतीमखदुमा की बोलत्यामानहीं
खूबे रत्नकलासितावकरमा लोलिम्मल्यावो इहाँ ।।५७।
सखी—आमा रत्नकला बुबू तुम्हनथी आकीलहे कोणमां
तोभी मासुरखूबपादतुमना देती विचारी बुढी।
बन्दोह्यां सबल्यां हमी हमन में होगी जिसे राजिला
सोवेगी सम ज्यावसोदकवरी लोलिम्मकुं सेज्यकूं ॥ ५८ ॥

ज्यासी वम्पाकठिनत्वकेलें तोकाय पांये इल मन्दिरासी।
तथापि तूं दौलत त्यांसि आणिठे नऊनियाथाचरणारविन्दी ॥ ५९ ॥
तरीचहे दौलतनावभाजे करीनवेगे मनि चे च तूजे।
बोले नियेसि बचनें तयांसि जेहि स्त्वये इल मन्दिरासि ॥ ६० ॥
अलिहियरिचरिकाम्हणुनियां हायां इत्र उदासूजणी
माजा रत्नकला बड़ीलभणिनी भीजाणसाली तुजी।
आतां जे विनती करी न सांगिली ते आज कांवीं तुहीं
माजी आण असे तुम्हां जरिपुरी विज्ञापना नायिका ॥ ६१ ॥

अघडित घड़चित्ते पापिया हा विधाता
सुघड़ित विघडित सर्वथा सत्यजाणा।
रुचि बहुउभयाँ ते ते थहें काय हावे
समयगुरुचिजाला लाललोलिम्बराजः ॥ ६२ ॥

हुकाली अहो कायपां शापिजेनाजगीं भाडणी कायपां वोलिजेना।
तुम्ही जाणता सर्व लोलिम्मराजा भली सेवकीते असे सत्य जाणा ।।६३।।

अणी घालिमाला गला चम्पकाची न कोने पुरे कंकणे रत्नकांचि।
तजौ याजि वा सर्वभृङ्गारसाजें जईभेटती, लाललोलिम्बराजें ।।६४।।
हृरणी वीर्वनताजमनी असे तूजविचिंततते स्वगृहीं वसी।
विनविती लोलिमराजकरी तुसी जमनि चे मनिचे करणे तुम्हीं ॥६५॥

श्री रत्नक०—

दस्तूरखानरुमिखानफरादखान गालीवखाननुरिखानजलालखान।
पोलादखानतुमही बहुशीघ्रजानेलोलिम्मराजसमजाउनशीघ्रयावे ।। ६६ ।।
कृष्णाजिपन्तहरिपन्तमुरारिपन्तरुद्राजिपन्तऋषिपन्ततिमाजिपन्त।
यावावल्हेवहुतुम्हासिअसेतआणालोलिम्मराजसमजाउनशीघ्रआणा ।।६७।।

ये रामा सविसो विनायर्कपिलो सोनूलुखो जोगधो
तानोरामधुनो मुकुन्दकमलो भानूदतो कोडधो।
हे गेले परितो नये विहि घराहे कापवो साजणी
वेडे रत्नकले तुवा विलविला लोलिम्मराजः कविः ।। ६८ ।।

लोलिम्मराज उवाच—

वदनकमलयाको देखते विश्वभूले
सबमुनिमनभ्याने वासवल्ली हि फूले।
जवरतनकलावो आज कोई मिलावो
तब सुखि सुख पावी लाललोलिम्मराजः ।। ६९ ।।
विनति अनुचरीची राउजी आय काहे
तुजविनमजभारी वेदना होत आहे।
वहुतकितिलि हाँवे शीघ्र गाँवां सयावे
क्षणभरि न गमावे लाललोलिम्मराजः ।। ७० ॥
मदनधरुणिमारा चन्द्रमाहानिवारा
न घलविजणवारा होत आहेत वारा।
इति निगदति यावत् तावदेवाऽऽगतोऽसौ
रतिपतिरिव साक्षाल्लाललोलिम्मराजः ॥ ७१ ॥
धरसि किति अबोला बोलकाई मुरासें
मदनदहनदाहे जीवजातो निरासे।
उर्डिकितिगुण आतां खेउ देऊ उलासें
निवचरति विलासे लाललोलिम्मराजः ॥ ७२ ॥
स्मरसि क्रिति मुरासा व्यर्थ हे सर्वमाया
मुकतिचि करिचिन्ता लाललोलिम्मराजा।

उणिमजसि कवि हे जायि तूं रामदासा
अवरमुगति केरी मुक्ति मेरी मुरासा ॥ ७३ ॥
तानीला वहुतानमानकरणे रामी हरामी असे
रंगीरंगकरी लवारधुधिकामासी सकामी नये।
आता योक असेतुआं भरवसा वाल्हेविली जायतूं
प्यारालोलिमराज आणिधरकूं देगा तुला सर्व्वहिं ॥ ७४ ॥
विडाघेतुनी आपुले द्वारदेसी उभी ठाकलो चित्रवीं वाहुलीसि।
सखी पाम्हण शीघ्र ये यून जाजा घरा येत से वैद्य लोलिम्बराजा ॥ ७५ ॥
आत्माराम० मजविण घड़ि कोठे जासि ना तूं रसाले।
न पुसत परलोका केवि गेलीस वाले ॥ ७६ ॥
विषय विषथ कर्ता सर्व संसार गेला
क्षणभरि परिमाहीं मुक्ति चा यत्नकेला।
न करि अलसुआतां सेवितुं कृष्ण आंधि
अभिनव सुखसाक्षी लाललोलिम्मराजा ॥ ७७ ॥
करिसिलि किनिमेकं वंधने हे चि वापा
दृढधरि हरि तेण्हें धूणि होईल पापा।
भवजलधितराथा यत्र आणीक नाहीं
सुखदुःखसमयां हि लाललोलिम्मराजः ॥ ७८ ॥
हलु हलु विषयांचे प्रेमसाडूनिथा चें
करुनि शुचि मनाँ ते शास्त्रवे प्रेमघावे।
तनुनघर असांवे साधुसंगे वसांवे
निजसुखगवसांवे लाललोलिम्मराजः ॥ ७९ ॥
वलितपलितातासी शीघ्रकाशी सजांवे
तजुन सकल धंदा शंकरालाभ जांवे।
धरुन अजगरांची वृत्तिदेहे त्यजांवे
पुनरपि उपजावे लाललोलिम्मराजः ॥ ८० ॥
स्नानं करुन्ति तुजहोइलते विशुद्धि
मर्त्यासि वास उवकीं परिपाक काय।
लोलिम्मराज करिसी किति कर्म्मकांडी
श्रीकृष्णनामजप हो भववंधतोडी ॥ ८१ ॥
अमृतमधुरलागे नाम तूं जे मुरारी
तुजविणभगवन्ता कोण कर्मा निवारी।

कवण करुन वापा आपुले प्रेम घावे
तुजविन पतुभावे लाललोलिम्मराजः ॥ ८२ ॥
तुजविणजगदीशा स्वामि आणी कनेणे
तुजसि शरण आलो मृत्युसंसार मेणे।
कृपणजनधनाते आढवी नित्य जैसा
कमलनयन तैसा तूज लाललोलिम्मराजः ॥ ८३ ॥
लोलिम्मराज रचितैर्विविधैर्विचित्रै-
र्वैदग्ध्यवद्भिरिह रत्नकलाचरित्रैः।
तेषां भवेत् सुकृतिनामधिकार सम्पत्
तेषां सहस्रभगदर्शनतोऽस्ति मुक्तिः ॥ ८४ ॥
इति रत्नकला चरित्र रत्नजाले
सकलांहि कविचा मनांसि आले।
अमृताहुन फार मृत्यु जाले
पढवांवे पुढिलाँ सि भक्ति भावे ॥ ८५ ॥

इति श्रीमल्लोलिम्बराजविरचितं रत्नकलाचरितं

समाप्तम् ।

—:०:—

# हरिविलासकाव्यम्

## प्रथमः सर्गः

रचयति सहसा यश्चित्रमेतं प्रपञ्चं,
प्रशमयति च तद्वत् केनचित् कौतुकेन।
अविदितमपरैस्तच्चण्डमुण्डादि नाना
दनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ १ ॥
यदपि मत्कविता गुणवर्जिता तदपि साधुसुखाय भविष्यति।
इह निमित्तमिदं यदुदीर्यते हरिकथा कलिकल्मषनाशिनी ॥ २ ॥
रे ! रे ! खलाः शृणुत मद्वचनं समस्ताः
स्वर्गे सुधास्ति सुलभा न तु सा भवद्भ्यः।
कुर्मस्तदत्र भवतामुपकारकारि
काव्यामृतं पिबत तत्परमादरेण ॥ ३ ॥
सुराऽसुराऽनुग्रहनिग्रहार्थं कृपागृहं विग्रहमादधानः।
श्रीकेशवः शैशवमेत्य नन्द-गोपालगेहाभरणं बभूव ॥ ४ ॥
अङ्घ्रिपल्लवरुचाऽनुरञ्जिता रिङ्गतो भगवतो मुरद्विषः।
अङ्गणेषु निचिताः सितोपलाः पद्मरागपदवीं प्रपेदिरे ॥ ५ ॥
परिस्फुरत्कैरवकोशकल्पः कृष्णस्य पाणौ नवनीतगोलः।
नीतां श्रियं याचितुमाननेन समागतश्चन्द्र इवावभासे ॥ ६ ॥
भगवति यदुनाथे नन्दसद्मावतीर्णे
फलदलमुकुलश्रीः शाखिनां सर्वदाऽऽसीत्।
प्रतिदिनमधिकाऽभूद् गोधनानां समृद्धिः
क्षणमपि न बबाधे व्याधिराधिश्च कश्चित् ॥ ७ ॥
सुकृतं किमकारि नन्दपत्न्या किमु नन्देन वयं न तत्प्रतीमः।
विजहार जगद्गुरुर्यदङ्के नवपङ्केरुहलोचनो मुकुन्दः ॥ ८ ॥
मुहुरिति विलपन्ती कुत्र पुत्रः प्रयातो
द्रुतमति बहिरन्तः पर्यटन्ती समन्तात्।
मरकतमणिमह्यां नाविदन्नन्दपत्नी
स्फुटमपि घनकृष्णं बालकृष्णं कदाचित् ॥ ९ ॥
कस्याश्चिदालिङ्गितबालकायाः प्रतिप्रतीक प्रचुरोत्सुकायाः।
कस्तूरिकाक्षिप्तमिव प्रकामं वक्षो मृगाक्ष्याः क्षणमात्रमासीत् ॥ १० ॥

मृगमदतिलकोऽस्य क्रीडतो घर्ममध्ये
　　व्यरुचदमलसान्द्रस्वेदविन्द्वन्तरस्थः ।
उडुभिरिव निरुद्धो वक्त्रनक्षत्रभर्तुः
　　कलितगिलनशंकैः सैंहिकेयः समन्तात् ॥ ११ ॥

नन्दश्चिदानन्दमयस्य तस्य मायानुरूपस्य परावरस्य ।
आलिङ्गनाद्यत्सुखमापदन्तस्तज्ज्ञानभाजोऽनुभवन्ति नाऽन्ये ॥१२॥

कन्दुकद्वयमतीवसुन्दरं राधिकोरसि निरीक्षितं मया ।
रन्तुमम्ब मम तत्प्रदीयतां स ब्रुवन्निति वहूनहासयत् ॥१३॥
निर्गुणोऽपि गुणिनामतिप्रियैः स्वैर्गुणैर्जगदिदं चराचरम् ।
मोहयन् विजयते स्म गोकुले पुण्यकृन्नयनगोचरो हरिः ॥१४॥
गोकुलान्निकट एव देवकी-बालकौ त्रिभुवनैकपालकौ ।
लीलयाऽनुचरवर्गवत्सलौ वत्सलौल्यवशतो विचेरतुः ॥ १५ ॥
शयनाऽशनाऽऽसनसमागमगीतं कुरुतःस्म कामकमनीयशरीरौ ।
सततं सहैव वसुदेवकिशोरौ वपुरेव भिन्नमुभयोर्नतु चेतः ॥१६॥
अश्विनाविव नितान्तसुन्दरौ चापलानुकृतबालकुञ्जरौ ।
तौ परस्परवियोगकातरौ भ्रातरौ सह सदा विजह्रतुः ॥ १७ ॥
पूतना हरिवधार्थमाययौ प्राप सैव वधमात्मनस्ततः ।
यः परस्य विषमं विचिन्तयेत् प्राप्नुयात्स कुमतिः स्वयं हि तत् ॥१८॥
　　धरस्य धरणात् करे वनहुताशनप्राशना-
　　　　दरिष्टवकधेनुक-प्रभृति दानवध्वंसनात् ।
　　इहाद्भुतमनुक्षणं शिशुरसौ सरोजेक्षणः
　　　　क्षणक्षणविलक्षणो ललितलक्षणो व्यातनोत् ॥ १९ ॥
　　अपि तनुनरमूर्तिर्भूतनाथप्रभावो
　　　　दधदपि च शिशुत्वं पूतनाघातकारी ।
　　अपि परयुवतीप्सुः पूतनामप्रबन्धो
　　　　मुदमतनुत पित्रोः पूतनारिः स्वसूक्तैः ॥ २० ॥
उज्झितस्वतनया व्रजस्त्रियः कृष्णमेव रमयाम्बभूविरे ।
चित्रमत्र किमु कुर्वते सदा तत्स्पृहामपि गतस्पृहा जनाः ॥ २१ ॥
　　द्वार्दत्तदृष्टिरसकृन्मधुसूदनोऽसौ
　　　　सद्म प्रविश्य बुभुजे मसृणं समस्तम् ।
　　स्नानादिकर्मकरणाय कलिन्दकन्यां
　　　　माद्यन्मतङ्गजगतासु गतासु तासु ॥ २२ ॥

समीक्ष्य समुपागतां सपदि सद्मनः स्वामिनीं
पलायनपरायणः स नवनीतचौरोऽभवत् ।
रुषा तमनुयायिनी न भवतिस्म धर्तुं क्षमा
घनस्तनपरिश्रमादलसगामिनी कामिनी ॥ २३ ॥
असकृत्प्रनर्तितकराम्बुरुहस्तदुपद्रुतो द्रुतमुपेत्य रुषा ।
इति नन्दगोपगृहिणीमवदद् व्रजवासिवामनयनानिकरः ॥ २४ ॥
अनुचितानि वचांसि वदत्यपि क्षिपति वक्षसि चैष लघूपलान् ।
अपि च पश्यति कैतवचक्षुषा गतनयस्तनयस्तव सर्वथा ॥२५॥
अस्मासु यातासु बहिः प्रयत्नाद् गृहान्तरं तस्करवद् प्रविश्य ।
सुतस्तवाज्यं नवनीतदुग्धदधीनि भुङ्क्ते व्रजपालपत्नि ॥२६॥
दत्ते सखिभ्यश्च बहिःस्थितेभ्यः पात्राणि सर्वाणि भिनत्ति पश्चात् ।
अन्यायमेतादृशमातनोति सदा मदान्नैष बिभेति किञ्चित् ॥२७॥
एवं गोपीवाक्यमाकर्ण्य सम्यक् ताः प्रत्याऽऽह प्रेमपूर्वं यशोदा ।
एतत्सर्वं मन्निमित्तं क्षमध्वं यूयं यात स्वगृहं भोः सुवृत्ताः ॥२८॥
इत्थं प्रसादं गमितासु सद्यो गृहं गतासु व्रजवल्लभासु ।
सुतं समालिङ्ग्य भयावलीनं स्वानन्दपीनं जननी जगाद ॥२९॥
किमिति गच्छसि वत्स ! परालयं स्वगृह एव रमस्व निरन्तरम् ।
तव ददे मसृणानि दधीन्यहं गतपयांसि पयांसि बहून्यपि॥३०॥
इति तव चरित निशम्य दुष्टं दुरितपथैकपराङ्मुखो वृजेन्द्रः ।
अयि सुत ! यदि ताडनं विदध्यादहह तदा किमहं चरीकरीमि ॥३१॥
अति दुष्टकंसनृपसाध्वसयोगादिति शिक्षितोऽपि बहुधा जनयित्र्या ।
पुनरप्यचूचुरदसौ नवनीतं न परोदितं हि कलयन्ति कुमाराः ॥३२॥
सततमखिलबालाः कर्मनामान्यगायन्
प्रतिभवनममुष्य श्रीपतेरेव तावत् ।
अमृतममृततुल्यं शैवलिन्या हि मुक्त्वा
विदधति सुधियः किं कूपपानीयपानम् ॥ ३३ ॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियतेस्म काव्यं
लोलिम्बराजकविना कविनायकेन ॥ ३४ ॥

इति श्रीमत्सूर्यपण्डितकुलालङ्कारहरिहरमहाराजोद्योतितलोलिम्बराज-विरचिते हरिविलासमहाकाव्ये बालक्रीडावर्णनं नाम प्रथमः सर्गः ।

—*—

## द्वितीयः सर्गः

नन्दः स्वनन्दनमवेक्ष्य वयो विशेष-
संशोभमानवपुषं बहुयुक्तियुक्तः ।
वृन्दावने बहुलबालतृणाभिरामे
रामेण सार्धमवगात् तनयेत्यभाणीत् ॥ १ ॥

ततः पुरस्कृत्य समग्रगोधनं कलिन्दकन्यातटकाननस्थलीम् ।
प्रभातकाले सखिसंघसंवृतः समाजगामागमदुर्गमो हरिः ॥ २ ॥
विदिताखिलपान्थपरिश्रमं सुवयसां वयसां कलकूजितैः ।
प्रविशतिस्म वनं पशुजीवनं बहुबलेन बलेन समं हरिः ॥ ३ ॥

वेणीव भूमृगदृशः स्फुटफेनबिन्दु-
श्रेणीच्छलेन धृतजातिलताप्रसूना ।
आलोकिता सखिजनेन समं मुहूर्तं
निःपक्ष्मपातममुना यमुना पुरस्तात् ॥ ४ ॥

तदवलोक्य विलासकलोचितं पवननर्तितवल्लिसमन्ततः ।
स्तवकचारु विचित्रमहीरुहं प्रचुरमाररमारमणः सुखम् ॥ ५ ॥
तडिदम्बरमम्बुदाभिरामं कृतकर्णाभरणं मयूरपिच्छैः ।
अधराऽधरशालिवंशवाद्यं जगदाद्यं परमं महश्चकासे ॥ ६ ॥

उपरि मुरलिकायाः प्राप्तबिम्बाधरायाः
करकमलनखास्ते बालकृष्णस्य तस्य ।
निविडमिव निखाता दन्तवस्त्रांशुमाला
मिलनवहलरागाः पद्मरागा विरेजुः ॥ ७ ॥

अपि प्रचुरलालसा मधु मधुव्रता नापिवन्
मुखात्तमपि नूतनं तृणचरास्तृणं नाचरन् ।
मुरारिमुरलिस्वरामृतरसैकबद्धादरा
न हंसपिककेकिनः किमपि कूजितं चक्रिरे ॥ ८ ॥

विभुवंशरवश्रवणप्रवणा बुभुजुर्न भुजङ्गभुजो भुजगान् ।
निकटेऽपि गताऽऽगतकेलिकरान् मकरान्नसरःसु बकप्रकराः ॥ ९ ॥

गोदोहनादिगृहकृत्यकृताऽऽदराणां
नन्दव्रजाम्बुजसहोदरलोचनानाम् ।
वेणुस्वनो यदुपतेः श्रुतमात्र एव
वृन्दावनाधिगमनोत्सुकतां व्यतानीत् ॥ १० ॥

प्रेमनात्मतनयस्य न क्षपा भ्रातृभर्तृपितृजापि न त्रपा।
भीतिरप्यहह मार्गभोगिनां नैव तद्गमनविघ्नमातनोत् ॥ ११ ॥
प्रस्थिता मणिसुवर्णभूषिताश्चर्चिता मृगमदैर्मृगीदृशः।
अङ्घ्रिमर्दितमहाभुजङ्गमा जङ्गमा इव लता बभासिरे ॥ १२ ॥
तुङ्गपीनकुचकुम्भशोभिताद् वक्षसश्चलितचैलपल्लवाः।
वेणुनादहृतचित्तवृत्तयश्चित्रवच्चलदृशोऽवतस्थिरे ॥ १३ ॥
आसामपि प्रेम परं किमात्मनि मनोऽधिनाथेऽप्यति वोद्धुकामः।
मायामनुष्यः सहसा तदक्षणामगोचरो गोकुलपालकोऽभूत् ॥१४॥

भगवति सहसैवाऽन्तर्हिते संज्वरार्ता
च्युतमतिरतिरस्याऽन्वेषणार्थे समन्तात्।
शिव शिव वनमध्ये गोक्षुरक्षेत्रचार-
क्षतचरणतला स्त्रीमण्डली हिण्डतेस्म ॥ १५ ॥

पप्रच्छ काचन वधूरिति कृष्णसारं
कृष्णः सरोजनयनो भवता न दृष्टः।
तस्या विलोचनविलासपराजितोऽसौ
दुःखीव किञ्चिदपि नोत्तरयाञ्चकार ॥ १६ ॥

भो भो भूरुह ! ते दिशोदशगताः शाखाः शिरश्चाम्बरं
गोपः कोऽपि तमालकोमलरुचिः कच्चिन्न दृष्टस्त्वया।
एवं ताभिरुदाहृते बत मुहुर्वक्तुं वचोऽनीश्वरो-
मूर्ध्ना वायुचलेन चन्दनतरुः प्रत्युत्तरं दत्तवान् ॥ १७ ॥

अयि तुलसि ! नमस्ते मुञ्च मौनं कृपातः
कथय कथय कृष्णः क्वाधुना वात्सीति।
भवति परमदुःखं तद्वियोगाग्निना मे
करुणमिति मुहुस्तां गोपिका काऽप्यवादीत् ॥ १८ ॥

बर्हं गृहीतुमवतंसकृतेऽति कान्तो
प्राप्तो भवेद् विभुरसौ विदितस्त्वयैव।
तत्कथ्यतां सुभग ! केन पथा प्रयातः
काचिन्मयूरमिति गोपगृहिण्यपृच्छत् ॥ १९ ॥

तदवधि तरलाक्ष्यो लक्ष्यते यः समन्ता-
दिह वसति स धूर्तः शीघ्रमायात यूयम्।
असकृदिति वदन्ती कामिनी काऽपि बालं
बत कमपि तमालं गाढमालिङ्गते स्म ॥ २० ॥

योे वासो यमुनातटे विरचितो यच्च द्विजास्तोषिता-
श्छायापल्लवसंश्रयैर्हिममरुद्वर्षादि सोढं च यत् ।
अत्रैवास्य फलं बभूव तपसा किञ्चित्कुचाऽऽनम्रया
तन्वङ्ग्या यदयं स्वयं दृढतरं दोर्भ्यां समालिङ्गितः ॥२१॥

अनवेक्ष्य तमीश्वरं समन्ताद् वचनाऽगोचरदुर्दशाः स्त्रियस्ताः ।
यमुनापुलिनं प्रति प्रयाता मधुमत्ता इव भूतले निपेतुः ॥२२॥
अथ ता मदनाऽनलेन दग्धा दिनदीनेन्दुमुखीर्दयासमुद्रः ।
समजीवयदच्युतः समस्ताः सुदतीः सुष्ठु समागमाऽमृतेन ॥२३॥
ताभिर्युक्तः पद्मपत्रेक्षणाभी राकारात्रिस्वामिरम्याऽऽननाभिः ।
तत्र प्रीत्या पुष्पधन्वेव साक्षाद् रासाऽऽरम्भं चक्रपाणिश्चकार ॥२४॥
सकलरागविचित्रविचारवित् सहजगाननिबद्धमृगीगणः ।
नटवदुत्सवकृद् व्रजवल्लवो व्रजगतोजगतो विभुराबभौ ॥२५॥
नवकुङ्कुमलिप्तविग्रहः श्रवणन्यस्तसुवर्णचम्पकः ।
विवरावलिनृत्यदङ्गुलिर्मुरलिं वादयते स्म माधवः ॥ २६ ॥
रदच्छदस्फूर्जदलक्तरागा कस्तूरिकापङ्ककृताङ्गरागा ।
राधा तदाऽऽलोकनसानुरागा श्रीरागरागाऽऽलपनं चकार ॥ २७ ॥

तद्रासमण्डलविलोकनकौतुकेन
देव्यो ययुस्त्रिदशवर्त्म सुवर्णवर्णाः ।
उद्वीक्ष्य ता दृढमिदं निरटङ्किलोकै-
रभ्रं विनापि तडितः क्वचिदुल्लसन्ति ॥ २८ ॥

द्रष्टुमभ्यागतं शार्ङ्गिणो विभ्रमान् भासयन्त्या नभो मण्डलं सर्वतः ।
दुर्लभोरुश्रिया क्लृप्तकेलिक्रिया रम्भयारम्भयारम्भयारम्भया ॥२९॥
तत्र त्रिनेत्रादिसुराः स्वपत्रैः सर्वे समीयुर्जवनैर्मनोवत् ।
पश्चाद् गणेशोऽप्यति कुन्थदाखुस्तदान्तरिक्षे नगरभ्रमोऽभूत् ॥३०॥
निरयस्य निदानमुक्तमार्यैः कुलटात्वं मनसापि सुन्दरीणाम् ।
अमृताय बभूव तत्तु साक्षाद् व्रजसारङ्गदृशां हि चित्रमेतत् ॥३१॥
रूपविभ्रमगुणोदयेन का मेनकामपि न गोपिकाऽजयत् ।
केवला तदपि जीविताधिका राधिका भगवतो हरेरभूत् ॥३२॥
इति सुतनुसमूहैर्ग्राम्यवत् क्लृप्तकेलिः
पथि सुरभिरजोभिर्लुप्तनिःसारहेलिः ।
यश इव शशिशुभ्रं श्रीपतिः साग्रजोऽसौ
नवजलधरधामा नन्दधामाऽऽससाद ॥ ३३ ॥

अपि परयुवतीप्सुः पापसंस्पर्शशून्यो
दधदपि मनुजत्वं सर्वदेवैकनाथः ।
अपि तनुतरमूर्तिर्व्याप्तलोकत्रयोऽसौ
नवलजधरधामा नन्दधामाऽऽससाद ॥ ३४ ॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यामृतं हरिविलास इति प्रसिद्धं-
लोलिम्बराजकविना कविनायकेन ॥ ३५ ॥

इति श्रीमत्सूर्यपण्डितकुलालङ्कारहरिहरमहाराजोद्योतितलोलिम्बराज-
विरचिते हरिविलासमहाकाव्ये रासक्रीडावर्णनं नाम
द्वितीयः सर्गः ।

—: * :—

## तृतीयः सर्गः

इत्थं विधायातिरसेन रासक्रीडां स वृन्दावनमध्यदेशे ।
इच्छाविहारी सह गोपगोभिर्गोवर्धनं गोधरमाजगाम ॥ १ ॥
तदवेक्षणलोललोचनं जगदानन्दकरं जगद्गुरुम् ।
तमुवाच विचारचञ्चुरश्चतुरं वाक्यमिदं हलायुधः ॥ २ ॥
विरचयन्ति विहारमिहान्वहं प्रणयिनीजनरञ्जितमानसाः ।
रुचिरचित्रविहंगमवारिजावृतवनेषु वनेषु वनेचराः ॥ ३ ॥

अनुभवति वियोगं नात्र कोकः कदाचित्
कलयति सहसख्यं चम्पकैश्चञ्चरीकः ।
न विरमति विकासो नीरजानां रजन्यां
जनयति वतचित्रं चन्दनः पुष्पयोगात् ॥ ४ ॥

तुङ्गत्वं नितरां निरीक्ष्य सहजं सौभाग्यमप्यद्भुतं
दिव्यानस्य मणीस्तथा प्रतिभटान्दिग्दन्तिनां दन्तिनः ।
अस्यानन्यसमस्य हन्तगिरयो लज्जाभरा दुस्तरा
मैनाकप्रमुखा निपेतुरुदधौ ये निस्त्रपास्ते स्थिताः ॥५॥

अमरचमरकेशी शश्वदम्भो विहार-
त्रुटितललितहारस्त्रस्तमुक्तासमूहैः ।

मधुकरकृतगानं पद्मखण्डेष्वखण्डं
सरिदुदयमगाधं गाधतां यात्यमुष्मिन् ॥ ६ ॥
मध्यशालिनि सुपर्वर्त्मनः पार्वणे रजनिजीवितेश्वरे ।
भूभृतामयमधीश्वरोऽद्भुतं छत्रयुक्त इव शोभते तराम् ॥ ७ ॥
मुञ्चन्मदं निर्झरकैतवेन जेजीयतोऽसौ करिराजरूपः ।
हेमाद्रिमुख्या गिरयः समस्ताः शावत्वमेतस्य विडम्बयन्ति ॥ ८ ॥
सह कुटुम्बमिहागताः कदाचिज्जलहीने सति मानसे समस्ताः ।
श्रमनुत्सु सरःसु राजहंसाः कलहंसाश्च मनोरमा रमन्ते ॥९॥
इह प्रतिवनं मदान्मुदिरकालकालं विना
नटप्रतिभटः सदा शिखियुवा नरीनृत्यते ।
द्विपाधिपविदारणारुणनखास्त्रसन्त्रासकृन्
मृगाधिपभयङ्करी न न दरी दरीदृश्यते ॥ १० ॥
इहस्तत इहार्थिनां प्रियपरम्परापूरणा-
ज्जयन्ति जगतीरुहः सुरतरुद्रुहस्तत्क्षणात् ।
हरन्ति च शुकाः स्फुरत्प्रथमपल्लवालीरुचः
सुधामधुरबन्धुरध्वनिमुचः शुचः सुस्रवत् ॥ ११ ॥
समग्रऋतुसम्पदा सततसंवृतैः सर्वतः
सुरैः सह सुराङ्गनावलिरिहैव सन्तिष्ठते ।
स्मरत्यपि न सर्वथा सुभगकन्दरं मन्दरं
हरेरपि न चास्मरत् कनकमन्दिरं मन्दिरम् ॥ १२ ॥
ये ये नृपाः प्रतिनृपालमहाभयेन नानासमृद्धिसुभगानि पुराण्यमुञ्चन् ।
ते ते तपस्विन इवात्र निषेव्यमूलकन्दोदकानि समयं गमयन्ति तावत्॥१३॥
क्रीडागृहन्ति लवलीलतिकानि कुञ्जा-
स्तल्पन्ति बालमृदुलारुणपल्लवानि ।
भोगः प्रसुप्तफणिनामुपबर्हणन्ति
मञ्चन्ति चात्र दृषदः कुलटाजनानाम् ॥ १४ ॥
नृपयुवतिकुचश्रीतस्करे कुम्भयुग्मे
दिनदलरवितप्ते प्रत्यहं प्रक्षिपन्ति ।
इह न कति करीन्द्राः पुष्कराऽलङ्कृतायां
सरिति किमपि पीत्वा पुष्करैः पुष्कराणि ॥ १५ ॥
जलदैर्जलविभ्रमादुपेतैर्जलमादातुमिव द्विपैर्विभान्ति ।
इह साब्जमिलिन्दमीनबालाबककादम्बकदम्बकास्तडागाः ॥ १६ ॥

अष्टापदद्रुसुमनः सुरभीकृतेषु
क्रीडावनेषु शिवयोः स्थितयोर्विनोदात् ।
अर्णोरुहासनसुतः कलहप्रियोऽत्र
भीतिं करोति महतीं महतीरवेण ॥ १७ ॥
अस्मिन् कदम्बकलिका कलितावतंसा
गुञ्जावली ललितपीनपयोधराद्याः ।
दृष्ट्वैव कस्य वशिनो विषयाऽनुरक्तं
चित्तं चिरं वनचरीं न चरीकरीति ॥ १८ ॥

इत्थं शृण्वंस्तस्य वाणीविलासान् पश्यन् रत्नश्रेणिशोभा विशेषान् ।
प्रीतिं प्राप्तो गोदुहां चक्रवर्ती मन्दं मन्दं शैलमध्याऽऽरुरोह ॥१९॥
अलङ्कृते पुण्यपयः प्रवाहैर्विश्रान्तिदानोद्यतवृक्षवर्गे ।
सिद्धाश्रिते श्रीपतिचित्तवृत्तिस्तस्मिन् प्रसादोदयमाससाद ॥२०॥
तत्राभिरामं नवनीरदाभो विराममासाद्य सुखी बभूव ।
गाश्चारयंश्चारु तृणस्थलीषु क्रीडामकार्षीदथ नन्दसूनुः ॥२१॥
अथ तस्य विधातुमर्चनं रुचिराभिः सुमनः समृद्धिभिः ।
गिरिराजममुं मनोरमं मधुमुख्या ऋतवः समाययुः ॥ २२ ॥

आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः
पीतः पुष्पविलोचनैर्नवलताः पौराङ्गनानां जनैः ।
अभ्राम्यद् वनपत्तने मधुमहीपालस्ततः कोकिला-
लीलाऽऽलापमिलद् भ्रमद्भ्रमरिका भाङ्कारभेरीरवैः ॥ २३ ॥
पुष्पाणि प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः
पश्चादुन्मदकोकिलालिललनाकोलाहलाः कोमलाः ।
इत्थं प्रादुरभूत्प्रविश्य परितः प्राज्यप्रमोदप्रदः
प्रोद्दामद्रुमराजिराजितवनस्थल्यामृतुक्ष्मापतिः ॥ २४ ॥
प्रसूनकलिकाऽऽकुलैः किसलयैः करस्पर्धिभिः
स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलाकूजितैः ।
इति क्रमसमुद्गतैरुपवनावली मण्डली-
ममण्डयदिव प्रियामृतुवसुन्धरावल्लभः ॥ २५ ॥

सुहृदस्तरुणी नखक्षतानां प्रतिपक्षाः पथिकाङ्गनाजनानाम् ।
दहनद्युतिदस्यवः समन्ताद्विपिने किंशुककुड्मला विरेजुः ॥२६॥
किंशुकक्षितिरुहां विलसन्तः कुड्मलाः कुटिलतां कलयन्तः ।
पान्थवारणविदारणताम्राः कामकेसरिनखा इव रेजुः ॥२७॥

आयाति यावन्मधुरेष तावद् वनस्थली प्रोषितभर्तृकाऽऽसीत् ।
अभ्यागतेऽस्मिन् यदनल्पलक्ष्मीः सौरभ्ययुक्ता तिलकं बभार ॥२८॥
कामकेलिकलिकंसमाधवे माधवे वनमुपागते चिरात् ।
वाग्विलासजितमत्तकोकिलाः कोकिलाः कलरवैर्विजह्रिरे ॥२९॥

वारस्त्रीव वनस्थली नवनवां शोभां बभारान्वहं
पान्थान्पीडयतिस्म तस्कर इव क्रूरैः शरैर्मन्मथः ।
शृङ्गारः सगुणः क्षमापतिरिव प्राप प्रतिष्ठां परां
रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात् ॥३०॥

उपवनतरुनृत्याऽध्यापने लब्धवर्णो
विरचितजलकेलिः पद्मिनीकामिनीभिः ।
प्रियसुहृदसमेषोरायययो योगियोग-
स्थितिविदलनदक्षो दक्षिणो गन्धवाहः ॥ ३१ ॥

पथिकजनजयार्थं चन्दनाद्रेः प्रतस्थे
कनककमलधूलिं दिग्वितानेे वितन्वन् ।
स्मरसमरविशेषश्रान्तशातोदरीणां
प्रशमितकुचकुम्भस्वेदनीरः समीरः ॥ ३२ ॥

प्राप्तः प्राज्यमिवश्रमं जलजिनी सौरभ्यभारंवह—
नुद्दामस्तवकानमन्नवलता लक्ष्मीमिवालोकयन् ।
स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रु वां विभ्रमान्
मन्दं मन्दमुपाजगाम पवनः पाटीरवाटी तटात् ॥३३॥

अतिमन्दचन्दनमहीरुहवातं स्तवकाभिरामलतिकातरुजातम् ।
अपि तापसानुपवनं मदनार्तान् मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥३४॥
कुपितापि मनः पतिना सह का सहकारविलोकनजातरसा ।
तरसा रमतेस्म न हा रमणी रमणीयतनुः सुतनुः सुरभौ ॥३५॥

प्रस्फुरत्प्रचुरबालपल्लवा वीरुधश्च तरवश्चकाशिरे ।
क्रीडिता इव कुसुम्भवारिभिः काममित्रसमये समागते ॥३६॥
कति कति न वसन्ते वल्लयः शाखिनो वा
किसलयसुमनोभिः शोभमाना बभूवुः ।
तदपि युवजनानां प्रीतये केवलोऽभू-
दभिनवकलिकाली भारशाली रसालः ॥ ३७ ॥
अनुपमगुण एकः स्यान्महत्वस्य हेतु-
र्वत गुणगणगन्धैः कश्चिदर्थो न तावत् ।

अ[illegible]शयवरवर्णेनास्पदं प्राप भूभृ-
च्चतुरचतुरकान्ताकर्णयोः कर्णिकारम् ॥ ३८ ॥
रू[illegible]सौरभसमृद्धिसमेतं चम्पकंप्रति ययुर्न मिलिन्दाः ।
कामिनस्तु जगृहुस्तदशेषा ग्राहका हि गुणिनां कति न स्युः ॥ ३९ ॥
अवलोक्य विलासवनस्थलीं न पथिकैः पथिकैः पतितं भुवि ।
मलयजद्रुमसौरभमेदुरो दरसमीरसमीरितवल्लरीम् ॥ ४० ॥
वकुलकुलमिलन्मिलिन्दमाला मदकलकोकिलकूजितोदयेन ।
अहनि नियमिनोऽपि तत्वचिन्ताच्युतमतयो वत योषितो वभूवुः ॥ ४१ ॥

विकसित सहकारे स्फारसौरभ्यसारे
वहति धुतपटीरे मन्दमन्दं समीरे ।
कलयति कलवाचं कोकिले साभिमानः
क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ४२ ॥
कूजितानि कलयन् वनप्रियो न प्रियो विरहिणामजायत ।
मन्मथाग्निरपि भस्मसादरं सादरं मुनिमनोऽम्बुजं व्यधात् ॥ ४३ ॥
विलासिभिरिवोन्मदैरचितरम्यगुञ्जारवैः
प्रसूनसुरभीकृतैर्विगलितश्रमास्तापसाः ।
अशोकशिखरस्थितैः सुनयनान्वितैः षट्पदै-
र्निरन्तरनिषेवितामितमधौ मधौ रेभिरे ॥ ४४ ॥

दत्ते जनोऽसौ खलु विद्यमानमविद्यमानं न तु कोऽपि तावत् ।
वियोगिनां पुष्पनमन्नशोकः शोकप्रदोऽभूदिति चित्रमेतत् ॥ ४५ ॥
जगौ विवाहावसरे वनस्थली वसन्तयोः कामहुताशसाक्षिणी ।
पिकद्विजः पीनमना मनोहरं मुहुर्मुहुः कूजितमन्त्रमादरात् ॥ ४६ ॥
आस्वादितं स्वादु मरन्दबिन्दुस्वच्छन्दमिन्दिन्दिरसुन्दरीभिः ।
माकन्दपुष्पं प्रमदाजनस्य प्रमोदमामोदभरैरकार्षीत् ॥ ४७ ॥
वसन्तकाले पथिकैककाले स्फुलिङ्गमालेव वियोगिवर्गान् ।
उद्धूलिता तापयतिस्म धूली धूलीकदम्बस्य समीरणेन ॥ ४८ ॥
पान्थानां प्रमदा इव प्रतिदिनं दैन्यं ह्रदिन्यो ययु-
र्दृश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः ।
निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः
पायम्पायमिव प्रियाधररसं पाथः पपुः प्राणिनः ॥ ४९ ॥

रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली मल्लीं सद्यः संश्रयन्तेस्म भृङ्गाः ।
भृङ्गैस्तत्रारम्भि हर्षेण गानं गाने लौल्यं लेभिरे योगिनोऽपि ॥ ५० ॥

अपि च नभसि वीक्ष्य व्याप्तदिक् चक्रवालं
सजलजलदजालं प्राप्तहर्षप्रकर्षः ।
विहितविपुलवर्हाडम्बरो नीलकण्ठो
विमदमृदुलकण्ठो नाट्यमङ्गीचकार ॥ ५१ ॥

महीमण्डलीमण्डपीभूतपाथो धरावर्षहर्षासु वर्षासु सद्यः ।
कदम्बे प्रसूनं प्रसूने मरन्दो मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥५२॥

दृष्ट्वाऽऽडम्बरमम्बरे घनकृतं सौदामिनी नर्तकी
नृत्याऽरम्भभृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् ।
पुष्यत्पुष्पभरानताङ्गणतरुस्कन्धावसद्वायस-
क्वाणाऽऽकर्णनसोत्सवप्रियतमं पान्था ययुर्मन्दिरम् ॥५३॥

अभिनवयसश्रीशालिनि क्ष्मातलेऽस्मि-
न्नतिशयपरभागं भेजिरे जिष्णुगोपाः ।
कुवलयशयनीये मुग्धमुग्धेक्षणाया-
मणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥५४॥

एष्यन्त्यवश्यमधुना हृदयाधिनाथा
मुग्धा मुधा कुरुत मा विविधं विलापम् ।
इत्थं शशंसुरिव गर्जितकैतवेन
पाथोधराः पथिकपङ्कजलोचनाभ्यः ॥ ५५ ॥

आकर्णितानि रसितानि यया प्रसर्पत्
प्रद्युम्नराजरथनिःस्वनसोदराणि ।
उच्चैरणच्चरणनूपुरया पुरन्ध्रया
क्षिप्रं प्रियः कुपितयापि तयाभिसस्रे ॥ ५६ ॥

अम्भोवाहमुराद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी
कन्दर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी ।
लेखा व्योमकषोपले विरचिता चामीकरस्य स्फुरद्-
धाम्नः पान्थविलासिनी जनमनःकम्पाय शम्पाऽभवत् ॥५७॥

हृदयं विदधेऽध्वगवामदृशां गगनं गुरुतल्पवदल्पतरम् ।
रसदम्बुधरं विलसच्चपलं चपलं चपलं चपलं च पलम् ॥ ५८ ॥

तडिच्चपलचक्षुषां गगनरङ्गनृत्यक्रिया-
वशात्सुमनसश्च्युता इव नवाभ्रधम्मिल्लतः ।
दवाग्निजनितापदां क्षितिरुहां मुदं मेदिनी-
रजः प्रलयविन्दवः सलिलविन्दवस्तेनिरे ॥ ५९ ॥

प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः
क्षणमपि मनसस्ते मानिनीमानमौज्झत् ।
तमसमशरशस्त्रीभूतगानप्रकारः
फणिनमिव शिखण्डी किं न खण्डीचकार ॥ ६० ॥

घनसमयमहीभृत्पत्तनस्याम्बरस्य
त्रिभुवनपतिचापं गोपुरत्वं प्रपेदे ।
अति विरसवचोभिः प्राप्तपङ्काभिषेकाः
कुकवय इव भेकाः खेदयन्ति स्म लोकान् ॥ ६१ ॥

सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनं
पन्थाः पङ्कसमाकुलः कलुषता वारां सदा दुर्दिनम् ।
एवं यद्यपि दूषणानि तदपि स्वभूर्जनोल्लासकृत्
सस्योत्पत्तिनिमित्ततैकगुणतः प्रावृट् प्रपेदे यशः ॥६२॥

वृद्धान्तिगेव विजहौ सरिदुद्धतत्वं
वेदान्तिनामिव मतं शुचि नीरमासीत् ।
चन्द्रे प्रभा युवतिवक्त्र इवाद्भुताऽभूद्
विद्वत्कवित्वमिव केकिरुत न रेजे ॥ ६३ ॥

मधुमधुरितभङ्गी भेजिरे हंसनादा-
तुहिनपटललीलां लेभिरे वारिवाहाः ।
क्षितिरभवदपङ्का किं च रोलम्बवाला
वलिललितनलिन्यः शैवलिन्यस्तदासन् ॥ ६४ ॥

स्फुटं स्फुटपलाशवत्सुभगभासिचञ्चूपुटे
विपाककपिशीकृताः कलममञ्जरीर्बिभ्रती ।
वभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा
स्वभावहृदयङ्गमा विबुधचापलक्ष्मीरिव ॥ ६५ ॥

चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपति-
र्ये ये तत्र धृताः करप्रतिभटास्ते तेऽमुना तत्क्षणात् ।
कान्तानां कुचभूधरे विदधिरे मन्येऽहमेवं तदा
नोचेन्मन्दकरः कथं दिनकरस्तप्तश्च तन्वीस्तनः ॥६६॥

तपनस्तपतिस्म मन्दमन्दं ज्वलनोऽपि ज्वलति स्म किञ्चिदेव ।
शरणं शिशिरेऽथ किं न यूनां युवतीनां कुचयुग्ममात्रमासीत् ॥६७॥

सकलऋतुसमृद्धिं तत्र भुक्त्वाऽभिरामां
समसमुदितचिह्नां तत्प्रभावोदयेन ।

असितजलधिजाया दीव्यदाभीरसुभ्रू-
सिचयनिचयहारि ब्रह्मगोष्ठं प्रतस्थे ॥ ६८ ॥
काले साध्वमयूखमुग्धमुदिरच्छेदाभिरामाम्बरे
गोपस्वामिनि गोकुलं प्रतिगते गोधूलिभिधूंसरे ।
वत्सैर्मातृविलोकनोत्सुकतरैराब्धशब्दं मुहु-
र्गोपावंशजवेणुवादनपराः स्वं स्वं गृहं प्राविशन् ॥६९॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियतेस्म काव्यं
लोलिम्बराजकविना कविनायकेन ॥ ७० ॥

इति श्रीमत्सूर्यपण्डितकुलालङ्कारहरिहरमहाराजोद्योतितलोलिम्बराज-
विरचिते हरिविलासमहाकाव्ये ऋतुवर्णनं नाम तृतीयः सर्गः ।

—*—

## चतुर्थः सर्गः

आकारणार्थं वसुदेवसूनोरक्रूरमक्रूरमुखस्वभावात् ।
तत्रान्तरे प्रेषयति स्म कंसो वीरावतंसो धृतदुर्विचारः ॥ १ ॥
भावि तद्वदनचन्द्रदर्शनः प्रेमपूरपरिपूरितोदरः ।
रामकृष्णपदपांसुपावनं प्राप गोकुलमसौ कुलोज्वलः ॥ २ ॥
असङ्ख्यगोसङ्ख्यविराजमाने दीपक्रियासादरसुन्दरीके ।
संवीक्ष्य नन्दस्य गृहे रमन्तौ मनोरमौ तौ रथमुत्ससर्ज ॥ ३ ॥
निगदितनिजनामा वैष्णवाग्रेसरस्तौ
रभसरभसयुक्तो विश्ववन्द्यौ ववन्दे ।
प्रसृतभुजमुभाभ्यां गाढमालिङ्गितः स-
न्शक्र इव भवदुःखं नैव किञ्चिद् विवेद ॥ ४ ॥
नन्दस्तत्र तदैव तावदगमत् प्रेम्णा परेणान्वितो
बिभ्राणःपुलकान्ननाम शिरसा दोर्भ्याश्च तं सस्वजे ।
तत्पूजामकरोद्यथाविधि ततः सर्वोपचारान्वितां
पश्चाद्वाचमुवाच तापशमनीं द्राक्षासदृक्षाक्षराम् ॥५॥
कार्यं त्वद्गुणवर्णनं तदुचितं नैवेकवक्त्रस्य मे
कुर्वं त्वत्स्तवमप्ययुक्तमधुना युक्तस्तु किञ्चिद्विदः ।
प्राप्ता पुण्यपरम्पराद्य महती पापं समग्रं गतं
धन्योऽहं धरणौ त्वदीयचरणौ दृष्टौ यदर्हन्मया ॥ ६ ॥

वचनमित्थमुदीर्य मनोहरं विरमतिस्म पतिव्रजवासिनाम् ।
तदनु तं निजगाद गदाग्रजः प्रियसुहृत् स्मितपूर्वमपूर्वभाक् ॥ ७ ॥

प्रशमयितुमधर्मं धर्मवृद्धिं विधातुं
त्रिभुवनपतिरास्ते त्वद्गृहे कृष्ण एषः ।
अयमपि बलभद्रो भद्रकृत्सज्जनानां
तव महिममहत्वं किं वयं वर्णयामः ॥ ८ ॥

त्रिजगदुदयहेतू ब्रह्मरुद्रेन्द्रचन्द्रै-
रविदितमहिमानौ रामकृष्णाविमौ यत् ।
कलितनरशरीरौ त्वद्गृहे गोचरौस्त-
स्तव महिमसमृद्धिं किं वयं वर्णयामः ॥ ९ ॥

आलिङ्गितोऽसौ परमेश्वरेण रामेण पश्चात् परमादरेण ।
स वैजयन्तीस्थितरेणुसार्थं कायं कृतार्थं मनुते स्म सर्वम् ॥ १० ॥

नन्देन पश्चात् परिपूजितोऽसौ दिव्यासनस्थो गलिताध्वखेदः ।
गोपाङ्गनाक्लेशकरं चिराय वक्ता स वाक्यं वदतिस्म किञ्चित् ॥ ११ ॥

इहागमनकारणं शृणु सखेऽधुना सादरं
हलास्त्रहरिदर्शनोत्सुकतरोऽस्ति कंसश्चिरम् ।
इमौ नय तदन्तिकं त्वमसुरान्तकौ तत्प्रगे
मुहूर्तमतिसुन्दरं विजयवर्धनं वर्तते ॥ १२ ॥

नन्द ते तनयदर्शनोत्सुकः कंसभूमिपतिरस्ति सन्ततम् ।
तत्प्रगृह्य तनयावुभाविमौ सद्य एव मथुरा विलोक्यताम् ॥ १३ ॥

तन्निशम्य वचनं तदीरितं तापमाप परमं व्रजाधिपः ।
माधवस्तु मुदमापदुत्कटां दैत्यनिर्दलनसाधनोद्यतः ॥ १४ ॥

तस्येति वक्तुर्वचनावसाने व्रजेश्वरस्तं पुनराबभाषे ।
आत्मासि नस्त्वं भगवत् प्रियत्वात्कुर्मः प्रमाणं भवदुक्तमेव ॥ १५ ॥

उषसि यास्यति यादवनन्दनो मधुपुरीं प्रति कंसकृतादरः ।
इति निशम्य वचो विषदुःसहं निजगदुस्तमरातिमिव स्त्रियः ॥ १६ ॥

अक्रूर ! ते नामनि निश्चयेन बली बहुव्रीहिसमास एव ।
अस्माकमात्मानममुं यतस्त्वं कृतान्तवन्नेतुमुपागतोऽसि ॥ १७ ॥

कनककङ्कणकुण्डलमेखलामणिगणांश्च गृहाण सहस्रशः ।
अयि! पवित्र! परन्तु मधुद्विपं मधुपुरीम्प्रति मा नय सर्वथा ॥ १८ ॥

अयि नृशंस ! बलादबलाजनान्नयसि चेत्त्वमभीप्सितमात्मनः ।
द्रुतमिहानय पातकमन्यथा व्रजवधूवधजं भवतो भवेत् ॥ १९ ॥

इत्थं कथां कुर्वति तेन साकं कदम्बके वल्लववल्लभानाम् ।
ग्लौर्ग्लानिमङ्गीकुरुतेस्म तासां मुखैःसमं यामवती वियोगात् ॥ २० ॥

प्रौढप्रतापनिलस्य दिनेश्वरस्य
प्राणेश्वरस्य समुपागमनं विदित्वा ।
द्यौस्तारकाः सुमनसः सुमुखीव भीता-
भुक्ता समं विधुविटेन विलुम्पतिस्म ॥ २१ ॥

रक्तोष्णीषं वासरक्षोणिभर्तुः शक्राशाया भालसिन्दूरविन्दुः ।
प्राचीनाद्रौ प्राप्तसंस्कारसम्पन्माणिक्यश्रीतस्करो भास्करोऽभूत् ॥२२॥
रोलम्बानां क्लिश्यतां पद्मकोशे कारागारे मोक्षमर्कश्चकार ।
तन्मालिन्यादेष नोपेक्षतेस्म प्रायः साधुः सर्वलोकोपकारी ॥ २३ ॥
एवं प्रभाते समुपस्थितेऽसौ कृत्वाऽशनं तैः सह शोभमानः ।
नन्दप्रियायाः सदनं प्रविश्य प्रयाणकालं कलयाश्चकार ॥ २४ ॥
मथुरागमनं निशम्य सून्वोर्नयनाम्भोजगलज्जला विषादात् ।
असदित्यवदत्पतिं यशोदा परिचर्यासु परायणापि शश्वत् ॥ २५ ॥

कसं कृतान्तसदृशं नयसि ध्रुवं चेत्
कन्दर्पतोऽप्यति मनोज्ञतनू तनूजौ ।
सम्यग्विचारय चिरं हृदि नाथ! यस्माद्
वृद्धा विचारचतुरा न भवन्ति किञ्चित् ॥ २६ ॥
न कुरु किमपि चिन्तां विष्णुरेवास्ति कृष्ण-
स्तनुजमनुजभावं या विधेहि त्वमस्मिन् ।
स्वयमयमविनाशी नाशकर्ता खलानां
प्रिय इति पतिनोक्ता सा सुखाऽब्धौ ममज्ज ॥ २७ ॥

उपायनायावनिवल्लभस्य कृत्वाग्रतो गोरसपूर्णकुम्भान् ।
अनोऽधिरूढः सह गोपवृन्दैर्नन्दो ययौ वक्त्रविडम्बितेन्दुः ॥ २८ ॥
चरणप्रणतौ जयी भव त्वं जननयित्र्या मुहुरित्युदीर्यमाणः ।
अति सत्वरगत्वरैस्तुरंगै रतिरम्यं रथमारुरोह कृष्णः ॥ २९ ॥
ततः प्रभाते समुपागतेऽसौ नन्दादिगोपैः सह शोभमानः ।
आरुह्य तत्स्यन्दनमादिदेवो व्रजाद्बहिः किञ्चिदुपाजगाम ॥ ३० ॥

आगम्यतां कमललोचन शीघ्रमेव
स्नेहं न मुञ्च न च विस्मर दीनबन्धो ! ।
कृष्ण ! त्वदेकशरणा वयमत्र सर्वा
नार्यः सनीरनयना हरिमित्थमूचुः ॥ ३१ ॥

अत्रागमिष्याम्यहमाशुतावत् प्रयात यूयं गृहमिन्दुमुख्यः ।
स इत्थमाश्वास्य वधूर्वचोभिर्मनोहरैर्विश्वपतिः प्रतस्थे ।। ३२ ।।

सुकृतं सकलं समाप्तमासीदिति मन्ये व्रजवासिनां जनानाम् ।
सुहृदाननीरजांशुमाली वनमाली मथुरां यतः प्रतस्थे ।।३३।।

आगताः कथमपि व्रजम्प्रति प्राणनाथविरहाकुलीकृताः ।
हन्त ! ता निजगृहेषु संस्थिताः संस्थिता इव सरोजलोचनाः।। ३४ ।।

नापाठयन् मृदुगिरः शुकसारिकास्ता-
ना लालयंश्च नकुलान् पृथुकानिव स्वान् ।
किञ्चाम्बुदध्वनिमुचो मुरजस्य नादै-
र्नानर्तयन् किमपि केलिकलापियूनः ।। ३५ ।।

एषा सा यमुनातटे च तदिदं वृन्दावनं पावनं
क्रीडाकुञ्जगृहास्त एव सुमनःस्तोमाभिरामश्रियः ।
तेनैकेन विना परन्तु परमानन्देन गोष्ठौकसां
गाढोद्वेगगतौजसां किमपि हा ! प्रीतिप्रदं नाभवत् ।।३६।।

विरहहुतवहाकुलीकृतानां प्रतिदिवसं व्रजवामलोचनानाम् ।
दिवसगणनयाङ्गुलीदलानां तनु तनु हन्त ! समग्रमग्रमासीत् ।।३७।।

अपि रजनिषु निद्रादैन्यशून्या दृगासी-
दहह दुरितवाह्यो वर्षवद् वासरोऽभूत् ।
यदुतिलकवियोगव्याकुलानां वधूनां
परभृतकृतजल्पः कालकल्पश्च जज्ञे ।। ३८ ।।

हर हर विरहाग्नौ प्रौढिमानं प्रयाते
मलयजहरहाराहारसंसर्गसारात् ।
व्रजजनतरुणीनां ताम्रधाम्ना ललाम्ना
स्रगपि कुचयुगस्थाङ्गारतां गाहते स्म ।। ३९ ।।

रतिनायकसायकप्रतप्तव्रजनारीनयनाम्बुसिन्धुदम्भात् ।
प्रतिसद्म जगाम भानुकन्या किमु कृष्णस्य विलोकनोत्सुकत्वात् ।।४०।।

अमृतं गरलं वदन्ति यद् भिषजस्तन्मतमुत्तमं सखि ।
वितनोत्यमृतद्युतिर्यतः परितापानिति काचिदब्रवीत् ।। ४१ ।।

अगलन्वलयानि तत्करेभ्यस्तदनङ्गाग्निमिवाक्षमाणि सोढुम् ।
शयनञ्च शयेषु तत्कपोलाः किमु कौशेशयसंशयादकुर्वन् ।।४२।।

प्रथमाक्षरवर्जितानि तासां भवनानि व्रजसुभ्रुवामभूवन् ।
विषयप्रकरो यकारशून्यो न कदाचिच्च रतिर्विना विनाऽऽसीत् ।।४३।।

न शैवलं शैवलिनीषु किञ्चिन्न पुष्करं पुष्करिणीषु तद्वत् ।
न वा मृणालानि मृणालिनीषु स्मरप्रतप्तप्रमदोपचारात् ।।४४।।

चक्षुश्च्युतप्रचुरपुष्करबिन्दुवृन्दै-
राद्रींभवत् पृथुपयोधरभूधरायाः ।
मुक्ताफलैर्विदधिरे त्रिपुरारिपूजां
प्राप्तुं पुनः प्रियवधूं व्रजवारिजाक्ष्यः ।। ४५ ।।

व्यापकोऽस्ति हरिरत्र नर्तको यद् व्रजान्मधुपुरीमपि यातः ।
ताभिरम्बुधरबन्धुरकान्तिः सर्वदैव ददृशे स पुरस्तात् ।। ४६ ।।

पुण्यान्यपुण्यानि च पुष्कलानि व्रजप्रियाणामिति तर्कयामः ।
सर्वेश्वरस्याद्भुतहर्षहेतोर्योगो वियोगोऽपि बभूव यस्मात् ।।४७।।

आलिङ्गति स्तनयुगं हरिरादरेण बिम्बाधरं पिबति वस्त्रमपाकरोति ।
वंशीरवैर्नवनवैश्च मुदं ददाति स्वप्ने कया नददृशे सुदृशेति शश्वत् ।।४८।।

वृन्दावनं पुष्पभराभिरामं गोवर्धनः कुञ्जकदम्बशाली ।
पतङ्गपुत्रीपुलिनं च दृष्टं नवं नवं तद्विरहं चकार ।। ४९ ।।

इति तद्विरहानलाऽऽकुला ललनाः क्लेशशतानि लेभिरे ।
भगवानपि वृक्षपक्षिणः पथि पश्यन् स शनैः शनैरगात् ।। ५० ।।

वियति विहृतिभाजा वायुवेगेन विष्वग्
रथचरणतुरङ्गोद्धूतधूलीभरणे ।
अपिहितमिहिरेणाऽऽलिङ्गितायां समन्तात्
सुरसरिति पयोजैः पङ्कजत्वं प्रपेदे ।। ५१ ।।

रजनिरजनिजानिचिह्नचीरौ घनघनसारसमावुभौ युवानौ ।
कमलदलदृशौ मुकुन्दरामौ पथि परितः पृथुकादयोऽप्यपश्यन् ।।५२।।

गोप्यात्रेण युतान्सहस्थितवता बभ्रुद्विजिह्वेन च
क्वापि क्वापि शनैः शनैर्मुनिसुतैरारब्धवेदध्वनीन् ।
प्रेक्षिष्टाऽध्वनि वृष्णिवंशतिलकश्चूतादिनानातरु-
च्छाया स्वादुफलापनीतपथिकाशेषश्रमानाश्रमान् ।। ५३ ।।

अतनुत सुजनस्याऽऽश्लेषवत् तत्प्रमोदं
दिवसकरकुमारी वीचिविस्तारहेतुः ।
अभिनवसुखखेलच्चञ्चरीकावलीनां
कुसुमितलवलीनां गन्धहृद्गन्धवाहः ।। ५४ ।।

यस्याः पुष्करमन्धकारनिकरश्यामाभमप्यञ्जसा
मालिन्येन वृतं वपुः स्फटिकवच्छुद्धं विधत्ते क्षणात् ।
कालव्यालजयैषिणा मसिलतां रम्यां रवेरात्मजां
तां सौरभ्यवशालिशालिकमलां प्राप त्रिलोकीश्वरः ।।५५।।

वीचिचञ्चलविहङ्गमावृतां पद्मपङ्क्तिसुरभीकृतोदकाम् ।
प्राप तां भगवतो विवस्वतो नन्दिनी स किलनन्दनन्दनः ।। ५६ ॥
तावुभावपि रथे स्थितौ सुखं पक्षिणां कलरुतैः कृतादरौ ।
स्नातुमम्भसि तमश्रमक्लमध्वंसिनि प्रविशतिस्म वैष्णवः॥ ५७ ।।
तमेव साक्षात्पुरुषं पुराणं मुरारिमुख्यामरसेव्यमानम् ।
स तत्र दृष्ट्वा बहिरन्तरस्थं प्रेम्णा स्तवं तस्य ततान सम्यक् ।।५८॥
तमेव कृष्णं कनकासनस्थं मनोज्ञमौलिं मणिरश्मिसङ्घैः ।
वक्षःस्थले कौस्तुभशोभमानं स्वर्णाभवस्त्रद्वयमादधानम् ॥५९॥
अलङ्कृतं चारु चतुर्भुजेषु कौमोदकीकम्बुरथाङ्गपद्मैः ।
आलोकयन्तं चतुराननादीन् कृताञ्जलीन्स्तोत्रकृतः पुरस्तात् ॥६०॥
अजामिल इलातले मलिनमूर्तिरासीन्महा-
न्न तेन सदृशः श्रुतो न च विलोकितः कुत्रचित् ।
सुते त्वदभिधाग्रहात् त्रिदशमुख्ययुक्तः स तान्
निरस्य मरुतोऽखिलांस्त्वयि सुखं खलः खेलति ॥ ६१ ॥
अपहाय भवत्पदारविन्दं परमानन्दमरन्दशोभमानम् ।
अधमाः कतिचित् कृपापयोधेर्विषकल्पान् विषयान्भजन्ति शश्वत्॥६२॥
मम सूनुरसौ मम प्रियाऽसौ धनमेतन्मम मन्दिरं ममैतत् ।
इति केशव केऽपि सङ्गिरन्ते न पुनर्नाम तवाभिराममेतत् ॥६३॥
अनित्यसुखलब्धये क्रतुषु कर्मठाः केचन
श्रुतेर्वचनमात्रतः पशुवधं सुखं कुर्वते ।
परन्तु न शुकादिवत् समसमस्तभूताः प्रभो !
भवन्ति भवहृतत्रे भवति भक्तिमातन्वते ॥ ६४ ॥
निरन्तरनिरादराः सुतसुहृत्सुदृक्सद्मसु
प्रसन्नमृदुमानसा गिरिगुहागृहावासिनः ।
प्रतिक्षणभवत्कथाकलितकौतुकाः श्लाघ्यतां
नयन्ति मतिमज्जना जनपते जनुः केचन ॥ ६५ ॥
जलजन्तुधृतो जले गजेन्द्रः पशुरप्येष भवत्स्मृतिं चकार ।
सदसद्विदुरैरतस्त्वमेव स्मरणीयोऽसि विपत्सु विश्वबन्धो! ॥६६॥
गृहं सुरसमृद्धिमत् प्रियतमा रमास्पर्द्धिनी
मतिर्गुरुगुरुत्वहृद् वपुरनङ्गभङ्गप्रदम् ।
यशः शशिवदुज्ज्वलं ज्वलनवत्प्रतापप्रभो !
समग्रमिदमाप्यते तव पदप्रसादोदयात् ।। ६७ ।।

भवज्वरनिवृत्तये पतितपावनत्वत्पद-
प्रवालमिदमौषधं हृदि सकृत्सुधीर्धारयेत् ।
अपि प्रियतमाजनाऽऽननिरीक्षणं वर्जयेद्
वसेच्च विजने वने फलदलाम्बु संसेवयेत् ॥ ६८ ॥
पदाम्भोरुहाम्भो ! दधाति त्वदीयं महेशोऽपि साक्षात्सदा मस्तकेन ।
विधिस्तावदासीद् भवन्नाभिपद्मादतः कः समस्ते समस्तेश्वरः स्यात्॥६९॥
समयत्रितयेऽपि सतां त्रसतां चरणौ शरणं भुजगप्रतिमात् ।
अयि तत्र भवन्भवतो भवतो भवतो भवतोषविशेषकरौ ॥७०॥
अये सुरशिरोमणे प्रतिदिनं प्रणम्याऽऽदरात्
कृताञ्जलिरहं पुनःपुनरिदं जनं प्रार्थये ।
अनारतगतागतश्रमसमीरकाकोदरं
सुरद्रुमसहोदरं भज भजाशु दामोदरम् ॥ ७१ ॥
शिव इति शिवमूर्ते त्वं प्रसिद्धाभिधानः
स्तनवसनसमीरस्वच्छचित्तस्य गौर्याः ।
उपदिशसि सदान्ते प्राणिमात्रस्य कर्णे
प्रतिदिनमविमुक्ते मुक्तये रामनाम ॥ ७२ ॥
यज्ञादिकर्मैकक्रृताऽऽदराणां गतागतप्राप्तिरवश्यमेव ।
त्वन्नाम नारायण ये स्मरन्ति तरन्ति ते संसृतिसागरं द्राक् ॥७३॥
अक्रूर इत्थं स्तुतिमीश्वरस्य श्लोकैरतिश्लोककरैरकार्षीत् ।
ततः प्रणामं स करोति यावत् तावत् त्रिलोकीतिलकस्तिरोऽभूत्॥७४॥
आगत्य सूर्यतनयापयसः स तीर-
मावश्यकं सकलकर्म समाप्य सम्यक् ।
आनन्दविस्मयसमूहसमन्वितोऽन्तर्-
नत्वा तमादिपुरुषं रथमारुरोह ॥ ७५ ॥
भव विरक्तमना भगवत्प्रियो रविसुतासलिलाद् बहिरागतः ।
विहितसर्वविधिर्हृदि विस्मितो रथमथो विदितजुं पथोऽभ्यगात् ॥७६॥
नागागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यं कृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ ७७ ॥

इति श्रीमत्सूर्यपण्डितकुलालङ्कारहरिहरमहाराजोद्योतितलोलिम्बराज-
विरचिते हरिविलासमहाकाव्ये भगवद्वर्णनं नाम
चतुर्थः सर्गः ।

## पञ्चमः सर्गः

अन्वितं वाजिभिर्वायुवद् गत्वरै-
श्चामरैश्चारुभिः शोभितैः सर्वतः ।
श्रीपतेराज्ञया नोदयामास तं
गान्दिनीनन्दनः स्यन्दनं सुन्दरम् ॥ १ ॥

दिव्यरत्नमयमन्दिरत्विषा निर्मितामितनभस्तलश्रियम् ।
तां जगत्पतिरिवामरावतीं पश्यतिस्म मथुरां पुरीं पुरः ॥ २ ॥

अवलोकनलोलविलोचनयोर्यदुनन्दनयोर्नवयौवनयोः ।
पथि काचन काञ्चनचारुरुचिः प्रमदा प्रमदातिशयं विदधे ॥ ३ ॥

तन्मुखोद्गतकथाकदम्बकाऽऽकर्णनाविदितवर्त्म वेदनः ।
माधवोऽथ सहसैव पेशलां पश्यतिस्म मथुरां पुरीं पुरः ॥ ४ ॥

मुग्धाः प्रदीपपटल प्रशमं नयन्ति
यस्यां रतेरवसरे वसनाञ्चलेन ।
अङ्गस्थभूषणमणिप्रकराः परन्तु
तासां वृथा विदधते बत चेष्टितं तत् ॥ ५ ॥

पश्यन्ति यत्र यमुनामसकृद् गवाक्ष–
मार्गैर्मृगाङ्कवदनाः परिपूर्णतीराम् ।
अम्भोविहारविहितादरवारिजाक्षी
वक्षोजवीक्षणविनोदिविटावलीभिः ॥ ६ ॥

दिनकरकरजालैर्यत्र संशोषितेषु
प्रलयदहनकल्पैः केलिवापीजलेषु ।
अलिकुलपरिपीता अप्यमन्दामरन्दा
जलजजठरजाताः पूर्ववत्पूरयन्ति ॥ ७ ॥

आरुह्य सौधशिखराणि नवातपानि
पीनस्तनद्वयपरिश्रमतः कथञ्चित् ।
प्रक्षालयन्ति वदनं वनिताः प्रभाते
यस्यां सदा सुरसरित्सलिलैः सलीलम् ॥ ८ ॥

अन्यत्र भिक्षुर्लभते सुशीलो वपुर्वियोगे परमं पदं यत् ।
यस्यां सदा मद्यमदप्रसक्ता वाराङ्गनास्तत्सुखमाप्नुवन्ति ॥ ९ ॥

सरभसमवगाह्यते कथञ्चित् सुतनुजनेन विलासवापिकाम्भः ।
ज्वलदतुहिनभासि मासि यस्यां चलमकरं मकरन्दवत्सुजातम् ॥१०॥

अनुपमरचनानां यत्रलीला गृहाणां
मरकतखचितानि प्राङ्गणक्ष्मातलानि।
अविरलरसपानाऽऽरब्धगानालिकान्ता-
कुलकुसुमसुजातैः पारिजातैर्जयन्ति ॥ ११ ॥

रहसि विलिखितस्य प्राणनाथस्य चित्रे
दृढतरपरिरम्भाऽऽरम्भरंगैकभूमिः ।
चकितचपलचक्षुर्वीक्ष्य वक्त्रं सखीनां
स्मितसुभगमुखश्रीर्लज्जते यत्र योषा ॥ १२ ॥

अविरतभगवत्कथैकतानाः प्रमदजलार्द्रदृशश्च्युतप्रपञ्चाः।
निमिषमिव दिनं नयन्ति यस्यां कति कति भागवतोत्तमा न शश्वत् ॥१३॥
अथ पथि रजकं ददर्श कश्चित् प्रभुषु वरो वसनानि तं ययाचे।
न स कुमतिरदात्ततः शिरोऽसावहरदुदग्रकराग्रमण्डलाग्रः ॥ १४ ॥
अम्बराण्यददतो दुरात्मनो याचितस्य रजकस्य कस्यचित्।
न्यक्कृतिं कृतवतोऽतिरागवान् कं चकर्त नृ विकर्तनो हरिः ॥ १५ ॥
ततो वसित्वा वसनानि सम्यक् पीताम्बरोऽसावसिताम्बरश्च।
शेषाण्यदाद् गोपकदम्बकाय तेषां तदा काचनकान्तिरासीत् ॥ १६ ॥
प्रविवेशपुरीं परैरगम्यां बहुरम्यां स समं समग्रगोपैः।
तमवेक्षितुमुज्झितस्ववालाः पुरबालाश्च समाययुर्गवाक्षान् ॥ १७ ॥

धन्या अहो ! व्रजसदां सुदृशः समस्ता
यासामसौ यदुपतिः पतिवन्मुदेऽभूत्।
सौधान्निरीक्ष्य नरनाथपथे मुकुन्द-
मन्योन्यमित्थमवदन्मथुरामहेलाः ॥ १८ ॥

अवनिभृदवरोधैः सौधतः प्रत्तमन्यं
च्युतलसदवतंसं स्पष्टवक्त्रारविन्दम्।
अपगतजनलज्जं निश्चलाम्भोजनेत्रं
जघनशिथिलवस्त्रं श्रीपतिर्दृश्यते स्म ॥ १९ ॥

सुन्दरैकनृपतिः परमात्मा वीक्षितो मम समस्तसखीभिः।
वञ्चिताहमिति वञ्चितनिद्रा मृत्युमुत्तमममन्यत काचित् ॥ २० ॥

पीताम्बरो जलदनीलरुचिः स कृष्णः
श्यामांशुको जलजगौरतनुः स रामः।
इत्थं यथार्थमयथार्थविदे जनाय
सूचीमुखेन सरलेन शशंस काचित् ॥ २१ ॥

निरीक्षितः सौधशिरःस्थिताभिस्तां राजधानीं पुरसुन्दरीभिः।
समग्रगोपावलिमध्यवर्ती विवेश कृष्णश्च स कृष्णवस्त्रः॥ २२॥
रतिपतिपरिपन्थि पर्वताग्रे कनकलता इव पुष्पशोभमाना।
न किमु रुरुचिरे तदास्वसौधे प्रचुररुचारुचिराश्चिरं चिरण्ट्यः॥२३॥
सौन्दर्याणां राशिमेकं मुकुन्दं वारं वारं वारनार्योऽप्यपश्यन्।
गत्वा गेहं तस्य शैवालशय्यां स्मारं स्मारं स्मारतापादकुर्वन्॥ २४॥
कामं साक्षान्मेनिरे तं समस्ता कामं कान्ते तेनिरे नैव किञ्चित्।
किञ्चापश्यन्नैव ताश्चन्द्रसंज्ञं चन्द्रं चूतं चन्दनं चम्पकानि॥२५॥

धरणिरमणमार्गे कंसदासी त्रिविक्रा
मधुमथनमलिम्पच्चारुणा चन्दनेन।
स सपदि हृदि हृष्टस्तां मनोज्ञामकार्षीन्
न भवति महतां हि क्वापि मोघः प्रसादः॥ २६॥

आनन्दकन्द! यदुराज! यदि प्रसन्नस्-
तन्मां सुखीकुरु विचित्ररतिप्रकारैः।
इत्थं स्मरज्वरवशाद् बहुभाषमाणां
तां साधु साध्विति हरिः प्रहसन्नुवाच॥ २७॥

रामः शौरिर्नन्दमुख्याश्च गोपा-
रंगस्थाने तस्थिरे ते समस्ताः।
अक्रूरोऽथ स्यन्दनस्थोऽगति शीघ्रं
रम्याकारं कंसवेस्माऽऽविवेश॥ २८॥

उभौ कृतशुभाशुभौ सदसतां क्रमादाहृतौ
तदास्य सरसीरुहादिति निशम्य कम्पातुरः।
अनिश्चलमना मनःपवनयोः पुरो गामिनं
मनोरमतुरङ्गमं नृपतिरारुरोह क्षणात्॥२९॥

तमागतं भृत्यमुखान्निशम्य समस्तसैन्यैः सहितः समन्तात्।
कंसः कृतान्तप्रतिमल्लमल्ले रंगस्थले मञ्चमुरीचकार॥ ३०॥
नागेन्द्रैर्नगसोदरैर्मदसरित् सन्तर्पितेन्दिन्दिरै-
रश्वैश्च प्रखरैः खुरोद्धतरजःपुञ्जप्रलुप्ताम्बरैः।
अन्वीतः परितः प्रकाशितगतिर्ढक्कादितूर्यस्वनैः
कंसः कालकरालयोधसहितो रङ्गस्थलं प्राविशत्॥३१॥
सर्वत्र सर्वेश्वरमेव पश्यन् रङ्गस्थले मञ्चमुरीचकार।
ततो ववर्षाशु शरानपारान् भुजङ्गभीमान्भृशमौग्रसेनिः॥ ३२॥

असिमुसलभुशुण्डीभिन्दिपालत्रिशूलैः
परशुपरिघकुन्तैर्मुद्गरैस्तोमरैश्च ।
अपि विशिखगदाभिः पट्टिशैश्चैककालं
यदुकुलमृगराजौ जघ्नतुस्तस्य योधान् ॥ ३३ ॥

हिममिव हिमजातं भानुमानातपेन
द्विरद इव करेण स्तोममम्भोजिनीनाम् ।
रविकरपरिरम्भप्रस्फुरन्मण्डलाग्रं
बलमथ बलरामो लाङ्गलेनोन्ममाथ ॥ ३४ ॥

यत्र स्थितः कंसमहीश्वरोऽसौ वीरैर्वृतः शस्त्रसमेतहस्तैः ।
स्थलं तदेवाभिससार शौरिःसिंहो यथा कुञ्जरकेलिकुञ्जम् ॥ ३५ ॥
जिघांसया तस्य समागता ये मल्ला मदान्धा धरणीध्रकल्पाः ।
सर्वेऽपि ते तेन बलोद्धतेन नीताः पुरं प्रेतपतेः क्षणेन ॥३६॥
अथ परमलघिम्ना मञ्चमारुह्य तुङ्गं
मृगपतिरिव शृङ्गं भोगिभोगप्रभेण ।
अहह ! तदसिना द्राक् पातयामास मह्यां
नलिनमिव मनोज्ञं कंसकं स प्रकोपात् ॥ ३७ ॥
प्रकटितधृतसाराः कान्दिशीकत्वभाजां
तदनु तदनुगानां शस्त्रवस्त्राणि जह्रुः ।
अपि पशुपतिडिम्भाः सोत्सवा निर्भयत्वान्
मदकलकरिकल्पा रङ्गभङ्गञ्च चक्रुः ॥ ३८ ॥
महामहसमन्वितः समभवद् यशोदापतिः
प्रफुल्लनलिनाऽऽननः सह समग्रगोधुग्गणः ।
हतेषु परिपन्थिषु प्रथितपौरुषेषु क्षणाद्
विपत्तितिमिरातुरोद्धरणसूनुना सूनुना ॥ ३९ ॥
एष यास्यति बतैककः कथं नाकनाथनगरीं स्वमातुलः ।
प्राहिणोदिति धियेव सत्वरं सीरभृत्तदनु तस्य सैनिकान् ॥ ४० ॥
प्रभुमपि पशुपालने यदेनं व्रजपतिरादिशतिस्म तत्प्रमाणम् ।
सदुचितमवमाधमाय तस्मै व्यतरदहो यदसौ स्वरूपयोगम् ॥४१॥
कुसुमवृष्टिरकारि तदा सुरैर्ननृतुरप्सरसश्च पुनः पुनः ।
जगदिदं गतशल्यमभूत् सुखं विदधिरे च तपांसि तपस्विनः ॥४२॥
अथ तत्र गतत्रपमेत्य गृहादति निर्दयताडितमस्तकहृत् ।
परिगृह्य शिरः कुपतेः करयोर्विलाप विलासवतीनिकरः ॥ ४३ ॥

विलेपुरस्याथ विलासवत्यस्तत्रागतास्तत्परिरम्य दोर्भ्याम् ।
हानाथ ! हा नाथक ! हा विलासिन् ! जातः कथं मृत्युरसौ तवेति ॥४४॥
फुल्लदम्बुरुहरम्यलोचनं कर्णलम्बि कमनीयकुण्डलम् ।
केन वज्रकठिनात्मना हृतं प्राणनाथ ! भवतः शिरः क्षणात् ॥४५॥
कोटिशः करटिनस्तवाङ्गणे लक्षशश्च ललितास्तुरङ्गमाः ।
पत्तिरेव सुकुमार हा कथं त्वं गतोऽसि भुवनान्तरं प्रति ॥ ४६ ॥
वीरहीनवसुदेवसूनुना त्वां निशम्य निहतं महोदयम् ।
अद्य गोत्रजगणो गृहोदरे नैव मास्यति मुदातिमेदुरः ॥ ४७ ॥
रुचिरं वचनं दृशौ सुदीर्घे बत निःशेषविशेषवल्गु वक्त्रम् ।
तनुता च तनौ स्तनौ च पीनौ प्रिय ! विश्वं विफलं विना त्वयैतत् ॥४८॥
हा प्रफुल्लनवकुन्दसुन्दरास्ते न चाऽप्रतिमभान्त्यमी रदाः ।
यैर्भवान् व्यरचयद् व्रणावलिं कोमलेऽधरदले पुनः पुनः ॥४९॥
अयि सुभग ! विना त्वया पुरीयं वयमिव राजति हन्त नैव किञ्चित् ।
अहह किमनया महासमृद्धया तृणवदसूनपि साम्प्रतं प्रतीमः ॥५०॥

विश्वं विलोकयति विश्वगिदं समस्तं
किं त्वं सुखं स्वपिषि भूमितले कठोरे ।
उत्तिष्ठ वीरवर ! रत्नमये स्वधाम्नि
पुष्पालिशालिशयने शयनं कुरु त्वम् ॥ ५१ ॥

भोजनावसर एव भूपतेरेति नाद्य बहिरेव किं स्थितः ।
सारिका यदि गृहे गदेत्तदा त्वं विपन्न इति को नु तां वदेत् ॥५२॥
अयि चुम्बसि चेन्न वक्त्रपद्मं कुचयोश्चेत परिरम्भणं न दत्से ।
त्रपयास्य जनस्य वार्यते किं किमु कोपो वरिवर्ति चक्रवर्तिन् ! ॥५३॥
त्वं गमिष्यसि महेन्द्रमन्दिरं भोक्ष्यसे नवनवाश्च सुन्दरीः ।
हन्त ! दुःखमधुना क्षणे क्षणे सुन्दरेक्षण ! न एव केवलम् ॥५४॥
युक्तमेव दिविगामिना त्वया तद् व्यधायि यदुपेक्षिता वयम् ।
ईदृशीं तव दशां निरीक्ष्य नो यन्न दग्धहृदयं विदीर्यते ॥५५॥
उदितैरुदितैश्च तत्र सर्वान् व्यथयामासुरिति क्षितीन्द्रपत्न्यः ।
अथ तत्समयोचितोक्तिभिस्ता दृढमाश्वासयतिस्म वासुदेवः ॥५६॥
ततो व्यधात् पार्थिवमुग्रसेनं बन्धं स्वपित्रोश्च निराचकार ।
तत् त्रासतश्चापगतान् दिगन्तान् सुहृज्जनानानयतिस्म देवः ॥५७॥

रुचिरकुचतटीनां नाट्यकाले नटीनां
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।

धिमकिति धिमिधिद्धिद्धिद्धि धिद्धिद्धिधिद्धि-
घिगिघिगिधिगितत्तत्थय्यथय्येति शब्दः ॥ ५८ ॥
अद्य वन्द्यचरणः सुरासुरैरन्तुमिच्छति मया समं हरिः ।
कंसदूतिरिति जातनिर्वृतिर्दहगेहसुषमां व्यरीरचत् ॥ ५९ ॥

भूषांशुकाश्वगजराजविराजमानान्
प्रस्थाप्य नन्दपशुपालपतीन् समस्तान् ।
कृष्णस्तया सह सहस्रदलायताक्ष्या
ज्योत्स्ना कृतस्मरजनिं रजनिं निनाय ॥ ६० ॥
प्राहिणोदथ विभुर्व्रजाङ्गनाः सान्त्वनाय मतिमन्तमुद्धवम् ।
सोऽपि तं व्रजमगाद् रथस्थितो विश्वविश्वधृतविष्णुभावनः ॥ ६१ ॥
चरमाचलमौलिमण्डलत्वं द्युमणौ प्राप्तवति प्रभोर्भुजिष्यः ।
अविशद् व्रजमुद्धवाभिधानो युतमानो रजसा गवां समन्तात् ॥ ६२ ॥
सह गणेन गवां व्रजमुद्धवस्ततरजः कणकच्चरकूर्चकः ।
प्रियतमास्तनसङ्गतसाम्ययोर्विहगयोर्विरहावसरेऽविशत् ॥ ६३ ॥

रतिपतिपरितापात् पाण्डुगण्डस्थलीभिः
प्रतिगृहकृततल्पं पल्लवैर्वल्लवीभिः ।
विरतसुरतलीलालास्यहास्यप्रसङ्गं
व्रजपुरमभवत्तन्नोद्धवस्योद्धवाय ॥ ६४ ॥
सहसाङ्गणमागतं रमाया रमणस्यानुचरं स नन्दगोपः ।
तरसा परिरभ्य स प्रहर्षं गततर्षं विषयेषु विज्वरोऽभूत् ॥ ६५ ॥

सम्पूज्य तं विधिवदुद्धवमासनाद्यैः
सम्यक् समग्रविधिवद् विविधोपचारैः ।
पप्रच्छ गोपपतिरित्थमनङ्गमूर्ति-
रास्ते स तत्र कुशली मुशली च तद्वत् ॥ ६६ ॥
पप्रच्छ यद्यद्व्रजसार्वभौमस्तत्तत्स तस्मै कथयाम्बभूव ।
तस्मिन् क्षणे ताः स्मरदुःखदीना मन्दाक्षहीना जगदुस्तमित्थम् ॥६७॥

कंसो हतः स्वसुहृदामपकारकारी
प्राप्तश्च राज्यममरेन्द्रपदानुसारि ।
दास्यन्ति भूमिपतयः शतशः स्वपुत्री-
रत्रागमो बत भवेदधुनास्य कस्मात् ॥ ६८ ॥
ग्राम्या वयं क्व पशुपालजनैकभोग्याः
सर्वोत्तमः क्व कमलाकरलालिताङ्घ्रिः ।

सङ्गोऽस्य यत्समभवत् स घुणाक्षरस्य
न्यायस्तदाप्तिरधुना शशशृङ्गतुल्या ॥ ६९ ॥
अकृतसुकृतपुञ्जैः स्वप्नमध्येऽप्यलभ्याः
परमपुरपुरन्ध्रीः सङ्गलब्ध्वा विहाय ।
विदितरतिविशेषः श्रीपतिः प्राप्तराज्यो
यदनुभवति दासीं तन्न सङ्घाघटीति ॥ ७० ॥
ध्रुवमेतदयोमयं विधिर्विदधे मे हृदयं हि निर्दयः ।
शतधा न विदीर्यते यतो विरहे दुर्विषये मधुद्विषः ॥ ७१ ॥
आगमिष्यति कदाचिदच्युतः कौतुकेन कृपया पुनः पुनः ।
उद्धव ! ध्रुवमनेन हेतुना जीवति व्रजविलासिनी जनः ॥ ७२ ॥
हन्त ! किन्न वयमुद्धव ! दीना दीनबन्धुरपि किं न मुरारिः ।
ह्रीरुदेति हृदि नास्मदुपेक्षां कुर्वतोऽस्य परमाद्भुतमेतत् ॥७३॥
अयि शृणु बत दीनोद्धारकोऽस्यां त्रिलोक्यां
सृजति विरुदमेतन्मूलभूतं त्रपायाः ।
वयमिह विरहाग्नौ दह्यमाना विमुक्तः
सह न हरिणदृष्ट्या तत्र केलिं करोति ॥ ७४ ॥
अनृतमुद्धव ! मा वद सर्वथा भगवतः शपथस्तव वर्तते ।
बत वयस्य सभासु कदापि नः किमपि स स्मरति स्मरसुन्दरः ॥७५॥
यावदार्य ! बत जीवितमास्ते तावदेहि दयया परमात्मन् ।
एवमेव वद तं बत गत्वा ब्रूमहे किमु वयं पुनरन्यत् ॥७६॥
इति ब्रुवाणो विरराम रामागणो गलद् गोलकगोसरोजः ।
ततः स वाक्यं स्मयमावभाषे दुःखद्रुमोन्मूलनकारि तासाम् ॥७७॥
उत्कर्षः क्रियते कथं कुमुदिनीबन्धोः प्रतिस्पर्धिनः
कृत्वास्यं मलिनं विलोचनजलैः स्फारीभवत्कज्जलैः ।
आयास्यत्यचिरात् करिष्यति सुखोद्रेकं स वः पूर्ववद्
राकाकैरवबन्धुबन्धुरमुखः कृष्णाभिधानो हरिः ॥७८॥
इति मधुरवचोभिर्घोषसीमन्तिनीनां
मनसि मनसिजार्ते स्वास्थ्यवासं वितन्वन् ।
कतिचिदयमनैषीत् तत्र रात्रीस्त्रिलोकी
पतिगुणगणगानोद्भूत-हर्षाश्रुपूरः ॥ ७९ ॥
उचितं न करोति कैटभारिः क्षणमप्येकमिहैति यन्न विद्वान् ।
इति स स्वमनस्यमंस्त तत्तद् विरहक्लेशकृशत्वदर्शनेन ॥८०॥

सुजनवरयशोदानन्दसन्दर्शनार्थं
यदुपतिमिह गत्वा प्रेषयैवेकवारम् ।
मुहुरिति मिलिताभिस्ताभिरुक्तो रथस्थः
कथमपि हरिदासो गोकुलान्निर्जगाम ॥ ८१ ॥

यद् यद् बभाषे सुमुखी समूहो यद् यत् स तद्दैन्यमवेक्षते स्म ।
तत्सर्वमागत्य गुणाकराय न्यवेदयद् भागवतावतंसः ॥८२॥

सरस्वदुदरे क्षणादलघु हैमहर्म्यस्फुर-
च्चकार पुटभेदनं विगतवेदनं स्वर्गवत् ।
इभाभ्रशशभृद्रसेन्दुमितसुन्दरीभिः समं
स तत्र सुखमन्वभूद्यदुकुलावतंसो हरिः ॥ ८३ ॥

ज्ञात्वापि गोपललना स्वसमागमोत्का
नो गोकुलम्प्रति जगाम जगन्निवासः ।
नाना नरेन्द्रतनया हृतचित्तवृत्ति-
र्जीर्णं जलं नवजलैर्ह्रियते हि नद्याः ॥ ८४ ॥

अनन्तः समं तासु कान्तासु लेभे
खनागाभ्रचन्द्रर्तुभूसङ्ख्यसूनून् ।
गुणज्ञान् गुणानां गणैरञ्जयन्तं
जयन्तं जयन्तं कमाहुर्न तेषाम् ॥ ८५ ॥

सदाश्रयी तस्य सदाश्रितस्य निस्तीर्णनानारणसङ्कटस्य ।
अज्ञानकान्तारधनञ्जयस्य धनञ्जयस्य क्षणराशिरासीत् ॥ ८६ ॥
बाल्यमैत्र्युपगतं द्विजमेकं दुर्बलं धृतसरन्ध्रपटार्धम् ।
अर्चतिस्म परिरभ्य स सम्राट् श्रीमदं न कलयन्ति कुलीनाः ॥ ८७ ॥
त्वद्बाहोद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता-
व्योम्न्यापुः समन्ताद् यदमुकुटमणे ! तत्र पङ्कोद्भुतोऽभूत् ।
आगच्छद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभि-
र्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति ॥८८॥
श्रीकृष्ण ! त्वत्प्रतापेन प्रतापीङ्गीर्दिगङ्गनाः ।
दिग्गजा वीजयन्त्येव कर्णतालैः पुनः पुनः ॥ ८९ ॥
वनेषु वनदेवता दिवि दिवौकसां वल्लभा
भुजङ्गकुलकन्यका भुजगलोकलीलावने ।
यशः समरसञ्चितं नरमृगेन्द्र ! गायन्ति ते
प्रभाविजितकौमुदी कुमुदपाण्डुताडम्बरम् ॥ ९० ॥

इति तस्य कृता स्तुतिः सुदाम्ना धनलाभार्थमुपागतेन दूरात् ।
अवतारशिरोमणिस्ततस्तं धनवन्तं धननाथवच्चकार ॥९१॥

जनकृतकृतधर्मे तस्य राज्ये समन्ता-
दगणितभुजशौर्यौदार्यरूढस्य शश्वत् ।
गहनगहनमध्ये दस्युनामापि नासीत्
त्रिदशतरुसमानो याचमानो जनोऽभूत् ॥ ९२ ॥

अपि सचित्रसहस्रसंयुतोऽसौ स्वयमकरोद्व्यवहारमेकविद्वान् ।
क्षणमपि खलसङ्गतिं न चक्रे सुकविसभासु सभासु नित्यमासीत् ॥९३॥

सदा सादरं सुन्दरीगीयमानं पुरग्रामकान्तारकुञ्जोदरेषु ।
असौ माधवो दुःखवृक्षावलीनां लवित्रं चरित्रं पवित्रं चकार ॥९४॥

विश्वम्भरोऽन्यांश्च निहत्य दैत्यान्विश्वम्भराभारमपाचकार ।
भवाब्धिमज्जज्जनतारकस्य प्रायोऽवतारोऽस्य सदुत्सवाय ॥९५॥

यस्त्रातुं व्रजमुज्जहार सहसा गोवर्धनं क्ष्माधरं
यस्त्रैलोक्यमदर्शयन्निजमुखाम्भोजे यशोदाकृते ।
यः पुत्रान् स्वगुरोर्यमालयगतान् शक्त्या निनाय क्षणाद्
यो भूभारमपाचकार सकलं तस्मै नमः शार्ङ्गिणे ॥ ९६ ॥

अतसीकुसुमोपमेयकान्तिर्यमुनाकूलकदम्बमूलवर्ती ।
नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलानि ॥ ९७ ॥

काव्यं हरिविलासाऽऽख्यं ये पठिष्यन्ति मानवाः ।
तेभ्यः श्रीहरिरत्रैव द्रव्यं दास्यति दैन्यहृत् ॥ ९८ ॥

हरिराजप्रतापार्कप्रतप्ताङ्गीर्दिगङ्गनाः ।
दिङ्नागा वीजयन्तीव कर्णतालैः पुनः पुनः ॥ ९९ ॥

शके मिते बाणनभःशरेन्दुभिः सुभानुसंवत्सरकोत्तरायणे ।
अमोघमासस्य च शुक्लपक्षगे कलौ कृतं काव्यमिदं जगन्मुदे ॥१००॥

किं कान्तामणिमेखलाकलकलैः किं कोकिलाकूजितैः
किं भृङ्गीमदमञ्जुगुञ्जितभरैः किं केकिकेलिस्वरैः ।
दैवाच्चेद् विहरन्ति कर्णकुहरे फुल्लारविन्दस्रवत्
सान्द्रामोदमरन्दबिन्दुमधुरा लोलिम्बराजोक्तयः ॥ १०१ ॥

वाग्देवी किमु वाक्पतिः किमु किमु व्यालः सहस्राननः
किं देवश्चतुराननः परिगतो भूलोकमालोकितुम् ।
किंवा सप्तमशास्त्रसृष्टिकुशलप्रोद्दामविद्वन्मत-
च्छत्राच्छत्रिविरामरामपरशुर्लोलिम्बराजः कविः ॥ १०२ ॥

सुजनैः कुजनैरपि रत्नकलारमणस्य कवेः कविताश्रवणात् ।
रमणीभणितं मुरलीरणितं भ्रमरीभणितं तृणवद्गणितम् ॥१०३॥
नानागुणैरवनिमण्डलमण्डनस्य
श्री सूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यं कृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ १०३ ॥

इति श्रीमत्सूर्यपण्डितकुलालङ्कारहरिहरमहाराजोद्योतितलोलिम्वराज-विरचिते हरिविलासमहाकाव्ये कंसवधोनाम पञ्चमः सर्गः ।

—*—

## ग्रन्थ परिचयः

काव्यं हरिविलासाऽऽख्यं पञ्चसर्गेषु विस्तृतम् ।
इतिवृत्तं हरेर्यत्र बहुवृत्तेषु वर्णितम् ॥ १ ॥
लक्षणैः काव्यशास्त्रस्य काव्यमेतदलङ्कृतम् ।
कथा हरेर्विलासस्य दिव्या यत्र पुमर्थदा ॥ २ ॥
सप्तशृङ्गयाः कृपापात्रं मानपात्रं हरेश्च यः ।
पत्न्या रत्नकलायाश्च प्रीतिपात्रं बभूव सः ॥ ३ ॥
बहुभिः कविभिः पूर्वैर्वैदर्भीरीतिराश्रिता ।
धन्यम्मन्या कवेरस्य कवनादभवद्ध्रुवम् ॥ ४ ॥
प्रत्यग्रकल्पनाकल्प-पादपेन पराजिताः ।
प्रत्नाः कविवराऽऽक्रीडाः प्रतिभामोदशालिना ॥ ५ ॥
रसाश्छन्दांस्यलङ्कारा अहम्पूर्विकया स्वयम् ।
यस्य वाचि समायान्ति तस्येदं काव्यमुत्तमम् ॥ ६ ॥
सुवर्णवाक्यसन्नद्ध-छन्दोरत्नसमुच्चयः ।
भाति लोलिम्वराजस्य काव्येऽस्मिन् योग उत्तमः ॥ ७ ॥
भवभूतेः शिखरिणी वंशस्थं भारवेर्यथा ।
तथा विराजते चास्य मालिनी कीर्तिशालिनी ॥ ८ ॥
राजन्ते रचना अन्याः शास्त्रकाव्यकलेवराः ।
चिकित्सावर्णनव्याजात् काव्यं यासु विजृम्भितम् ॥ ९ ॥
कवेर्लोलिम्बराजस्य यशोमूर्त्या कृतस्थितेः ।
काव्यतत्वविदां प्रीत्यै कृतिरेषा प्रकल्पताम् ॥ १० ॥

—डॉ० ब्रह्मानन्द त्रिपाठी

# प्रबन्धलेखक-वंशवर्णनम्

माद्यद्दुद्दामविघ्नौघ-द्विरेफकुलतर्जकम् ।
सिन्दूरारुणशोभाढ्यं स्मेराऽऽस्यं हृदि भावये ॥

रारजते भारतभूर्महार्हैं रत्नैरशेषैरभितः प्रकीर्णैः ।
पर्युत्सुका यत्र निवासहेतोः स्वर्गीयसौख्यानि विहाय देवाः ॥ १ ॥
तत्रैकदेशे यशसां निधानो विराजते **गुर्जरदेश** एषः ।
यत्राऽभवद् **गौतमगोत्र**जन्मा **सत्सामवेदी कुथुमाऽऽख्यशाखी** ॥ २ ॥
लोकोत्तरज्ञानविकीर्णभाभिर्भास्वत्तनुः कोऽप्यवताररूपः ।
श्रीमान् सुधीर्नीतिविदां वरिष्ठः षट्शास्त्रवेत्ता विबुधावतंसः ॥ ३ ॥
चन्द्रश्रिया भूषितसर्वकायः **श्रीचन्द्र**नामा प्रथित**त्रिपाठी** ।
युग्माब्धिरामैकशकाब्दमध्ये विख्यातकीर्तिर्नृपतिर्बभूव ॥ ४ ॥
**उद्यानचन्द्रः** सुजनाभिरामः कूर्माचलीयोऽभिनवः शशाङ्कः ।
राज्ये तदीये **शुकदेव**नाम्ना **श्रीचन्द्रदेवः** स्वसुतेनसाकम् ॥ ५ ॥
कूर्माद्रेर्मुकुटे निसर्गरुचिरे **कोसी-सुवाँलाऽऽवृते-**
श्रीग्वल्ला-गणनाथ-सैममहिते नन्दाऽऽख्यदेव्या युते ।
देवैः सिद्धमहर्षिभिर्बुधजनैः संसेविते प्राक्तनैर्-
**अल्मोडानगरे** समेत्य समुखं वासं स्वकीयं व्यधात् ॥ ६ ॥
धरामूर्ध्नि रम्ये हिमाद्रेः प्रसारे समेषां जनानां मनोदृग्विहारे ।
चिरं पावने सर्वदा निर्विकारे निवासं स चक्रेऽथ **चौसार**सारे ॥ ७ ॥
स्वीकृत्य वासं नृपतेर्निदेशान् मन्त्रागमज्ञाननिधिः स तूष्णीम् ।
अभ्यर्च्य देवान् कुलदेवताश्च तत्रत्य भूमिं सजलामकार्षीत् ॥ ८ ॥
प्रसन्नेन राज्ञा तदा भूसुराय समभ्यर्च्य भूमिं धनं पुष्कलञ्च ।
समाहूय दत्तं सपुत्रेण तेन तदङ्गीकृतं सत्समापण्डितेन ॥ ९ ॥
सम्मानसीमामधिरुह्य धीरः सद्धर्मनिष्ठः श्रुतिशास्त्रसम्मतान् ।
गृह्यान् बहून् यज्ञविधीन् विधाय पुत्रे समारोप्य गृहस्य भारम् ॥ १० ॥
विशेषसन्यासविधानतो यः सन्यस्तदेहः स चिरं चकास्ति ।
वंशे तदीये गुणगौरवाऽऽढ्ये जाता अनेके विदुषां वरेण्याः ॥ ११ ॥

तस्मिन् सुधांशुविमले सुकुले बभूव श्रीमान् सतां गुणधरो **मुरलीधरो**ऽयम् ।
यस्यावदातचरितान्यधुनापि मर्त्या आदर्शवद् व्यवहरन्ति न विस्मयोऽत्र ॥ १२ ॥
तस्माद् बभूव सुदिने स्वकुलावतंसः प्राज्ञः प्रतापविमलो द्विजकर्मनिष्ठः ।
पित्रोर्मनोरथशतैः सुकृतैरनेकैर्मान्यो **मनोरथ** इति प्रथिताभिधानः ॥ १३ ॥
जातास्ततो बलपराक्रमशीलयुक्ताः पुत्राः कुशाग्रधिषणास्त्रय एव योग्याः ।
तेष्वग्रिमः सुविदितो **हरिदत्त** नामा स्वल्पायुरेव सुरलोकमगात् स्वपुण्यैः ॥ १४ ॥

तस्यानुजः सच्चरितः सुरूपः **श्रीकृष्ण** नामा महनीयकीर्तिः ।
भाषानुरागात् स गतो विदेशं स्निग्धान् समग्रान् प्रविहाय बन्धून् ॥ १५ ॥
भ्राता चित्रकलासु तस्य निपुणः सङ्गीतवित् सात्विकः
सद्वैद्यः सुकृती परोपकरणो गृह्यागमे पारगः ।
नित्यं शम्भुपदारविन्दयुगले श्रद्धासमृद्धाशयस्-
**तारादत्त**बुधस्त्रिपाठिकुलजः सम्मानसीमाञ्चितः ॥ १६ ॥
पत्नी तदीया गुणशीलयुक्ता **खष्टी**ति नाम्नी पतिभक्तिनिष्ठा ।
कन्याऽथ **पाण्डेयशिरोमणेः** सा प्रासूत पुत्रं दुहिताद्वयञ्च ॥ १७ ॥
दिवङ्गता पञ्चखशून्ययुग्मे संवत्सरे श्रावणमासि कृष्णे ।
गौरीतिथौ पुण्यवती शनौ सा कुटुम्बहार्दं सहसा विहाय ॥ १८ ॥
तत्सूनुर्जननीवियोगवशतः स्वाध्यायबुद्धया गृहात्
काशीम्प्राप्य भिषग्गुरोरधिजगे **श्रीलालचन्द्रा**भिधात् ।
आयुर्वेदमितःपरं गुरुवरात् **खिस्ते**ऽन्ववायोद्भवाद्
**ब्रह्मानन्द**बुधोऽपठत् सुललितां साहित्यविद्यामपि ॥ १९ ॥
तत्पत्नी सकलाकलासु कुशला **तारा**ऽभिधा श्रीमती
चत्वारः सुषुवे सुतान् गुणनिधीन् कन्याद्वयञ्चापि सा ।
पुत्राः संस्कृतवाङ्मयं पुनरिमे पाश्चात्यविद्यामपि
श्रीविश्वेशकृपाकटाक्षवशतः सर्वे पठन्त्यादरात् ॥ २० ॥
कूर्माद्रौ **नयनीसरोवर**मिति ख्यातञ्च यन्मण्डलं
तस्यैवास्ति समीपवर्ति सुमहद् **भीमाभिधानं सरः** ।
प्राक्तस्यास्ति **शिलावटी**तिविदितो ग्रामोऽभिरामो द्विजै-
स्तस्मिन् **ब्रह्मकुटी** तदीयवसति. पुण्यव्रजैरर्जिता ॥ २१ ॥
त्रिपाठिकुलवर्य्याणां सदाचारपरायणा ।
सद्धर्मकर्मनिष्णाता राजिरेषा विराजताम् ॥ २२ ॥

## निवेदनम्

**लोलिम्बराज**रचितैः सरसाभिरामै—
ग्रन्थैः क्वणद्भिरिव **रत्नकला**चरित्रैः ।
युक्तः प्रबन्ध इह राजत एष नूत्नः
साहित्यसौरभसमृद्धहृदां मुदे वः ॥ १ ॥
प्राच्यपाश्चात्यसाहित्य-ज्ञानदिग्धयशोजुषाम् ।
गुरूणां कृपया साङ्गः **प्रबन्धः** पूर्णतामगात् ॥ २ ॥

---